# NOTICES

OF

# SANSKRIT MSS.

BY

RÁJENDRALÁLA MITRA, LL. D., C. I. E.,

*Honorary Member of the Royal Asiatic Society of Great Britain and Ireland, of the Physical Class of the Imperial Academy of Sciences, Vienna, and of the Bombay Branch of the Royal Asiatic Society of Great Britain, Corresponding Member of the German and of the American Oriental Societies, of the Royal Academy of Science, Hungary, and of the Ethnological Society of Berlin, Fellow of the Royal Society of Northern Antiquaries, Copenhagen, &c., &c.*

PUBLISHED

UNDER ORDERS OF THE GOVERNMENT OF

BENGAL.

VOLUME V.



CALCUTTA:

PRINTED BY J. W. THOMAS, AT THE BAPTIST MISSION PRESS.

1880.

# INDEX TO VOL V.

चित्रकूट महापुण्य पर्वतानां हि सुन्दर ।
वाल्मीकिश्च महातेजा न्यवसद्धर्मतत्पर ॥
दर्शनार्थं मुनेस्तस्य मार्कण्डेयो महामुनि ।
आजगाम चिरायुर्हि चित्रकूटालय मुनि ॥

End कि मया वक्तव्या वाच्य सर्वपुण्यफलान्वित ।
व्यासप्रसादाज्जानामि श्रीरामस्य कथा तथा ॥
इत पर महारम्य विवाहचरित शुभ ।
वर्णयामि महापुण्य ब्रह्मणामघमोचन ॥

Colophon इति श्रीमत्याख्याने सूतशौनकसवादे एकोनपञ्चाशत्तमोऽध्याय ।
समाप्तश्च पूर्वार्द्ध ।

विषय । १–१० अध्याय,—सूतेन सह शौनकादीना सवादकथन । वाल्मीकिसन्दर्शनार्थं मार्कण्डेयस्य चित्रकूटगमनविवरण । तत्पुरतो वाल्मीकिना रामचरित्रवर्णन । रामस्य बाललीलावर्णनव्याजेन सपुत्राभि कौशल्यादिभि अन्त पुरागतस्य वसिष्ठस्य सपर्य्या-विधानादिकथन । श्रीरामलक्ष्मणादीना विष्णुरूपादिरूपण कौशल्यादिभि स्वप्नदर्शनवृत्तान्तकीर्त्तनञ्च । एकदा कौशल्याधाविकाया कैकयीमन्दिरगतस्य दशरथस्य समीपे राम नयनवृत्तान्तकीर्त्तन । कैकेय्या रामाभिनन्दनादिप्रकारकथनञ्च । मन्थरया सह कैकय्या सवादकथन । तत्र विस्तरेण कैकय्या विवाहवृत्तान्तकथन । दशरथस्य सत्यपि अन्त पुरवर्गे तस्या नितरामनुरागकारणकथनञ्च । नारदेन सह दशरथस्य सवादकथन ।

११–२१ अध्याये,—यागिन्या सह कैकयराजमहिष्या सवादकथन । गर्गेण सह दशरथस्य सवादकीर्त्तन । तत्र अजातपुत्रेण दशरथेन कैकेय्यायेन पुत्रो भविष्यति तस्मै राज्य दास्यामीति प्रतिज्ञाकरणवृत्तान्तकथनं । शत्रुघ्नादिभि कन्दुकेन ताडिताया मन्थराया अभियोगार्थं दशरथसमीपगमन रघुस्थवर्णनादिक । लोमशप्रोक्त-मन्थराचरितकीर्त्तन । तस्या पूर्व्वजन्मनि विरोचनाभिधानस्य दैत्यराजस्य कन्यात्वकथनादिक । तथा विप्रहतानां क्रतुभुजा दुरवस्थादिवर्णनञ्च । पराशरस्य वाल्मीकिनो रामचरितपाठकथन । दशरथाङ्कस्थितस्य रामस्य विस्तरता रूपवर्णन । तीर्थदर्शनार्थं सर्व्वेषां देवानां भारतभूमावागमनवृत्तान्तकीर्त्तन । तत्र पैलाख्यपुरत पुरन्दरेण तद्वृत्तान्तकथनञ्च ।

२१–३० अध्याय,—सावित्या पुरतो विधातुरयोध्यादिमाहात्म्यकथन । तत्र म-हात्म्यकथनञ्च । विशेषत अयोध्याया ग्रामादिवर्णन । श्रीरामसन्दर्शनार्थं ब्रह्मादीदशरथपुरप्रवेशवृत्तान्तकीर्त्तन । रामस्य विविधमान्यक्रीडादिवर्णन । रामदशा

मन्त्रुलीमाकर्षयतो भूसुण्डनामकस्य काकस्य वृत्तान्तकीर्त्तन । भूसुण्डकृतरामस्तोत्र-कीर्त्तनं । दशरथस्य स्वकपुरे विश्वावसुनामकस्य गन्धर्व्वराजस्य सङ्गीतालापेन मोहितानां रामचन्द्रादीनां चेष्टादिवर्णन । कैकेय्या आदेशेन शरसन्धानपूर्व्वकं दशरथेन इन्द्रसद्मनि विश्वावसुचेष्टितप्रकाशकपत्रेण सह बाणनिक्षेपादिविवरण । गन्धर्व्वकृतमोहनादिना दशरथादीनां भ्रान्तिवर्णन ।

३८-४९ अध्याये,—रत्नकलाया वृत्तान्तकीर्त्तन । रत्नकलावीरसिंहयो वशिष्ठाश्रम-प्रवेशविवरणकथन । वशिष्ठस्योपदेशेन तयो कलायनामकग्रामगमनानन्तरं तत्र तपस्यादिवर्णनं । तयो यशोदानन्दरूपेण गोकुले जन्म भावीति कथनञ्च । राम-नवमीव्रतमाहात्म्यकीर्त्तन । अगस्त्याश्रमवर्णन । तस्य तपस्यानुष्ठानप्रकारकथनञ्च । अगस्त्योक्तरामनवमीव्रतानुष्ठानप्रकारकीर्त्तन । तत्र मरुकान्तारदेशस्थानां पञ्चपापि-नामुपाख्यानकथनं । विस्तरत रामस्य पौगण्डलीलावर्णन । दशरथकृतशरव्यवेध-कौतुककीर्त्तन । दशरथस्य पुरत शरभ्या निजजन्मवृत्तान्तकथन । चारुचन्द्र मधुनाश-सुकण्ठ विजयप्रभृतिरामचन्द्रवयस्यकथन । रामचन्द्रादीनां कन्दुकक्रीडादिवर्णन । तेषां धनुर्विद्यादिशिक्षाकथन । कैशोरलीलावर्णनञ्च । नाविकस्य प्रार्थनया रामा-दीनां मद्दिषदहननार्थं प्रयाणवृत्तान्तकथन । त्यक्तमहिषरूपस्य विल्वाभिधानस्य गन्धर्व्वराजस्य रामस्तोत्रकीर्त्तन । एकदा मृगयार्थं गहनमध्ये प्रविष्टस्य रामस्य कदर्थमभावेण वल्मीकदेहं परित्यज्य डिण्डिरनामकस्य किरातस्य आत्मवृत्तान्तकथन-गुहेन सह रामस्य सखित्वसंस्थापनादिविवरणकथन । वनशोभावर्णन । रामवय-स्येन विदूषकेण वसन्तवर्णनकीर्त्तन । रामचन्द्रादिकृतवसन्तोत्सववर्णन । भरतकृत-सिंहहननवृत्तान्तकथन । सिंहस्य पूर्व्ववृत्तान्तकीर्त्तन । अयोध्यायां आयासगमनविवरण कीर्त्तनञ्च ।

---

## No 1724 तैत्तिरीयश्रुतिवार्त्तिकं ।

Substance country made paper, 11 × 5 inches Folia, 46 Lines, 10 on a page Extent, 1,057 s'lokas Character, Nagara Date, ? Place *of deposit*, Nashipura, Zila Murshidabad, Babu Jagannathaprasada *Gupta.* Appearance, old. Verse Correct.

*Taittiriya s'ruti vartika* —A dissertation on the theology and philosophy of the Taittiriya Upanishad By Sures'a Achárya The work belongs to the Vedánta School of Philosophy. The author's name is incorrectly given in the codex, it should be Sures'vara Áchárya.

Beginning ॐ नमो गणेशाय ।

सत्य ज्ञानमनन्तमेकमकलं ध्वस्तान्धकारं परं
निर्द्वैतं हृदि पद्ममध्यनिलयं निःशेषधीसाक्षिणं ।
वेदान्तोपनिषद्विशेषविषयं प्र+ज्ञया योगिना
भक्त्या न प्रणिपत्य वेदशिरसो वक्ष्यामि सद्वार्त्तिकं ॥
यस्येव सकलाम्ब्रेन्दुकिरणश्रेणीर्यमाररश्मिभि
र्वार्त्तं यस्य कृपालुता परवशयसो दिर्त द्युतिर्नां ।
यद्वाणीकुलिशावर+मनय येतुर्दिशप्रवार्त्तिका
भक्त्या पूज्यतम प्रणम्य नमत तद्भाष्यमीतो यते ॥
तैत्तिरीयकसारस्य मयाचार्यप्रसादत ।
विस्पष्टार्थं रुचीना हि व्याख्येय सम्प्रणीयत ॥ इत्यादि ।

End तैत्तिरीयकसारस्य वार्त्तिकामृतमुत्तम ।
मस्करीन्द्रप्रणीतस्य भाष्यस्यैतद्विवेचम ॥
मुमुक्षुसार्थवाहस्य भवनामस्पतो यते ।
शिष्यप्रकार तद्भक्त्या सुरेशाख्यो महार्थवित ॥

Colophon इति श्रीसुरेश्वराचार्यविरचित तैत्तिरीयकश्रुतवार्त्तिक समाप्तं ।

विषय । पद्येन तैत्तिरीयकोपनिषदो व्याख्यान ।

---

## No 1725 प्रपन्नदिनचर्या ।

Substance, country made paper, 12⅓ × 5 inches Folia, 6 Lines, 9 on a page Extent, 111 s'lokas Character, Nâgara Date, ? Place of deposit Nashipura, Zila Murshidábad, Bábu Jagannathaprasada Gupta Appearance fresh Prose Correct

*Prapannadina charya* —A manual of the daily religious duties of the Vaishnavas of the Rámanuja School Anonymous

Beginning श्रीमते रामानुजाय नमः ।

श्रीमापारक्षपापाचप्रपन्नजनसम्मता ।
दिनचर्या विशषैरुपभोग्या विरच्यत ॥

अथास्मां लीलाविभूत्या प्रपन्नश्रीवैष्णवो निरन्तराचार्य्याभिमानविरत कैङ्कर्य्य-
तरातिशयेन अपरयामे समुत्थाय गुरुपरम्परापूर्व्वकमित्यादि ।

End अथ लक्ष्मीनाथसमारम्भामित्युक्तश्लोक एव प्रमाणीक्रियते। इति ।

Colophon इति प्रपन्नदिनचर्य्या समाप्ता ।

विषय । रामानुजसम्प्रदायवैष्णवानां दैनिकोपासनादिप्रकारकथन ।

---

## No 1726 त्रिकाण्डचिन्तामणिः ।

Substance, country made paper, 13½ × 5 inches Folia 250 Lines, 10 on a page Extent, 8092 s'lokas Character, Bengali Date, Sk 1742 Place of deposit, Nashipura, Zilá Murshidabad, Babu Jagannathaprasáda Gupta Appearance, new Prose Correct

*Trikánda chintamani* —Annotations on the *Trikanda-sésha* lexicon of Amara Siṅha By Raghunátha Chakravarti, of the village of Srímantasára

Beginning नत्वा गिरीशचरणाम्बुजमाकलय्य सन्त्यपि तत्त्वविदुषां रघुनाथनाम्ना ।
श्रीकण्ठवत्समसदामतिसन्निधियोगादीरस्वनोति विसमामरकोषटीका ॥
यास्ये विधाय विनय क्षतिनोऽप्रमेतद्वयं मया यदिह शास्त्रविरुद्धमुक्तं ।
आलोक्य सम्यगवधानपरैः क्षन्तव्यमेतत्सुधियैव कृपया परिष्कृत्यमेव ॥
पन्थारम्भे निखिलविघ्नविघाताय अभिमतदेवतानमस्कारेण धर्म्ममुत्पादयन् शैव-
वैष्णववीक्षान प्रवर्त्तयितु शिष्यशिक्षायै आदौ निबध्नाति । यश्चति ।

End स्वयमेव काम इत्यादिप्रयोगाच । पुस्तमित्यादिकमूह्यं ।
सत गुरूणां प्रविचार्य्य यथादाल्य सन्त्यपि च कविदानां ।
श्रीमां गुहे श्रीरघुनाथशर्म्मा त्रिकाण्डचिन्तामणिमातनाम ॥

Colophon इति श्रीमारजलारपामनिव विद्वीरघुनाथचक्रवर्त्तिकृतत्रिकाण्डचिन्तामणावमर-
कोषटीकायां लिङ्गादिसङ्ग्रहवर्गविवरणं । समाप्तश्चायं पुस्तकं । शकाब्दाः १७४२ ।

विषय । अमरकोषव्याख्यान । अत्र निखिलकोषग्रन्थसंवादेन अपूर्व्वैव निर्म्मिता टीका ।

---

## No. 1727. सोमकर्मप्रदीपिका ।

Substance, country-made paper, 10 × 4 inches. Folia, 156. Lines, 7 on a page Extent, 2,500 ślokas. Character, Nágara. Date, ? Place of deposit, Nashípura, Zilá Murshidábád, Bábu Jagannáthaprasáda Gupta. Appearance, very old Prose Correct.

*Somakarma-pradípiká*.—A guide to the performance of sacrifices with the Soma beverage. By Ráma.

Beginning. श्रीगणेशाय नमः । भवाजोऽग्निचितो नत्वा विद्याकरगुरोः पदे ।
रामः पद्धतिमाधत्ते सोमकर्मप्रदीपिकाम् ॥
तत्र दर्शपौर्णमासाविष्ट्वा वसन्ते सोमेन यजेत । अथ योऽप्रकृतसोमो द्विपुरुष-सोमपीथी, आधानसमनन्तरमेव सोमेन यजेत । अद्विपुरुषसोमपीथी अनुप-न्नप्रसोमो वा आधाय दर्शपौर्णमासपूर्वकं यजेत । इत्यादि ।

End. स प्रैष वाचयति नमो वरुणाय पाश इति प्रथमं सूक्तावृत्त्या प्रावृत् ++++
निष्टनामे + सर्वेषां । अवभृथेष्टा निष्क्रम्य यजमान्++स्यायत्तायतनवचनात् । तत
गार्हपत्यं स्थापयेदिति शम् । ग्रन्थसङ्ख्या २८०० ।

विषयः । सोमयागप्रयोगकथन ।

---

## No 1728. एकाहानां पद्धतिः ।

Substance, country-made paper, 10 × 4½ inches. Folia, 10. Lines, 10 on a page Extent, 1,168 ślokas Character, Nagara. Date, ? Place of deposit, Nashipura, Zila Murshidabad, Babu Jagannáthaprasada Gupta. Appearance, very old Prose. Correct

*Ekáhánám Paddhati*.—A manual for the performance of ephemeral or Ekáha rites Anonymous

Beginning. ॐ नमो गणेशाय । अथैकाहानां पद्धतिर्लिख्यते । तत्र उदयने पूर्वपक्षे पुण्याहे प्रतिपदि वा शोभने नक्षत्रे अनुकूले चन्द्रे वा एकाहा दीक्षा भवन्ति । तेषा-मनादेशे एका दीक्षा तिस्रो वा चतस्रो वा द्वादशी वा अपरिमिता वा दीक्षा भवन्ति तिस्र उपसद । इत्यादि ।

End. राजपुरोहितौ सायुज्यकामौ यजेयातां। पुरोधाः कामो वा ब्राह्मण इति। इतीन्द्राग्नो स्तोम॰॥ इतः खण्डितं। परिशेषे द्वे पत्रे न स्तः।

विषय। तत्र प्रथमत, भूर्नामकस्य एकाहयागस्य सङ्क्षेपेण प्रयोगकथन। एव ज्योति॰। गौ। आयु। अभिजित। विश्वजित्। सर्व्वजित्। ज्योतिः। सर्व्वज्योतिः। विश्वज्योतिः। विरातसम्मितः। अनुप्तिः। विश्वजिच्छिल्पः। श्येनः। एकत्रिकः। चतुःषोडशी। षट्षोडशी। द्विषोडशी। ऊर्द्धस्तोम॰। अग्निष्टुत्। इन्द्रस्तुत्। सूर्य्यस्तुत्। वैश्वदेवस्तुत्। इषुयज्ञः। बृहस्पतिसवः। इषु॰। सर्व्वस्वारः। सर्व्व-स्तोमः। चतुश्चत्वारिंशत्स्तोम॰। अष्टचत्वारिंशत्स्तोमः। वाचस्तोम। त्रिवृत्। पञ्चदशः। सप्तदश॰। एकविंशः। त्रिणवः। त्रयस्त्रिंशः। वैश्वदेवोऽग्निष्टोम॰। वरुणप्रघासः। अग्निष्टोमः। शाकमेध॰। अतिरात्रः। ज्योतिष्टोमः। अतिकर्म्म-स्तोमाः। अग्न्याधेयस्तोमः। पुनराधेयस्तोमः। अग्निहोत्रः। इन्द्राग्निष्टोम॰। इतः खण्डितं।

---

## No. 1720. सूर्य्यानुवादिनी।

*Substance, country-made paper, 11 × 4 inches. Folia, 50 Lines, 6 on a page. Extent, 845 s'lokas. Character, Nágara Date, ? Place of deposit, Nashipura, Zilá Murshidábád, Bábu Jagannáthaprasáda Gupta. Appearance, old Pro-e. Correct.*

*Súryánuvádiní.*—A commentary on Mayura Bhatta's hymn to Súrya in a hundred stanzas. By Vallabha.

Beginning. नत्वा वागीश्वरीं देवीं बालानां बोधसिद्धये।
सूर्य्यानुवादिनी टीका वल्लभेन विरच्यते॥
जम्भारातीति। भूयासुः। भवेयुः। के किरणाः। कस्मै विभूत्यै। इत्यादि।

End. ईदृग्गुणविशिष्टः स निर्दिश्यते। कैरपि परिक्लेशैरपि स दुर्गतामीप्सुरर्थयितं। दिश्यतु। इति।

Colophon. इति श्रीपण्डितवल्लभेन विरचिता सूर्य्यानुवादिनी सूर्य्यशतकटीका समाप्ता।

विषयः। मयूरभट्टकृतसूर्य्यशतकस्य व्याख्यान।

---

## No 1730 बुधरञ्जनी ।

Substance, country-made yellow paper, 13 × 5 inches Folia, 35 Lines, 6 on a page Extent, 841 s'lokas Character, Bengali Date, ? Place of deposit, Nashípura, Zilá Murshidábad, Babu Jagannáthaprasada Gupta Appearance, fresh Prose Correct

*Budharañjaní* —Annotations on the difficult passages in the 10th book of the Bhágavata Purána By Vasudeva The work is not commonly known

Beginning नत्वा कृष्णपदद्वन्द्व वासुदेवेन यत्नत ।
क्रियते दशमस्कन्धटीकेयं बुधरञ्जनी ॥
कृष्णावतारचरितश्रवणामृतनिर्म्मित ।
चन्द्रानुवादेनैतस्याः प्राज्ञा शृण्वन्तु तत पुन ॥
यद्यपि नवमस्कन्धे सूर्य्यवंशवर्णनानन्तर सोमवंशवर्णनं, तथापि सोमवंशे श्रीकृष्णावतारात् तस्य प्रधानत्वात प्रथमत उपन्यास । अभ्यर्हितत्वात् प्राग्भावो वेति । उत्तरवंश्यानामिति पाठे सूर्य्यवंश्या पूर्व्वाः सोमवंश्याश्च उत्तरा । तथा च सूर्य्यवंश्याना श्रीरामाद्यवताराणा चरित कथित सोमवंश्याना कथयेति । यदो स्वधर्म्मशीलस्य यदोश्च धर्म्मशीलस्य इति पाठ । तत्राशेनावतीर्णस्य विष्णोर्वीर्य्याणि शंसन । ननु कृष्णस्तु भगवान् स्वयमित्युक्तत्वात् कथमंशेनेति यद्रुच्यत । अत्र स्वामी, प्रतीत्यभिप्रायेणेति । केचित्तु प्रतीति व्याचक्षते । पुराणान्तरेषु कृष्णावतारश्रवणात् । परीक्षित प्रतीत्यभिप्रायेणेत्यर्थ । तथा च शौनक प्रति सूतस्य कथन । कृष्णस्तु भगवान् स्वय । न तु परीक्षित प्रति शुकस्य वचन । तत्र । प्रथमस्कन्धावधि शुकमुखात परीक्षितश्रवणात । अत्र गुरव । हे कृष्णेन प्रधान इति शुकसम्बोधन । इत्यादि ।

End. स्वामी तु अमृतत्व हेतु । मदाभूत पीतशेष । तथा च जन्मकाले श्रीकृष्णेन पीतमिति भाव । तथा च वामनपुराणे । मातापि बालक सुप्त पर्य्यङ्के स्तन पायिन । इति श्रवणात् ।

Colophon इति एकाशीतितमाऽध्याय ।

विषय । श्रीमद्भागवतदशमस्कन्धस्य विषमस्थलीयव्याख्यान ।

## No 1731 प्रपन्नामृतं वा रामानुजचरित्रं ।

Substance, country made paper, 13 × 4 inches Folia, 290 Lines, 7 on a page Extent, 5,752 s'lokas Character, Nagara. Date, Sm 1861 Place of deposit, Japharaganja Bada Akhda, Zila Murshidabad, Gopaladasa Mahanta. Appearance, fresh Verse Generally correct

*Prapannamrita* alias *Ramánuja-charitra* A legendary life of Ramánuja, the great Bhakta reformer, and founder of the dualistic school of the Vedantists The name of the author of the work is not apparent, nor have I any means of making a guess as to his age The work extends to 90 chapters It opens with a scene in Vaikuntha where Hari, anxious to promote the translation of mankind to his favourite region, desires Phaniraja or Ananta to descend on earth as a saviour The scene then changes to the village of Bhutapuri in the district of Tondila, three Yojanas to the west of the eastern sea There lived a pious man of the name of Kesava of the Harita family He once celebrated a rite during a lunar eclipse, praying for a son The prayer was granted Ananta informed him in a dream that he would himself become the son of the devotee, and assume the name of Ramanuja In due course the son was born, and named Lakshmana Arya with the alternative name or title of Ramanuja. On his 16th year, the boy was married to a maiden named Rakshákámba Soon after this marriage he lost his father, and repaired to Kanchipur, where he placed himself under the tutelage of one Yadava, a renowned scholar

While he was at Kanchipur, the daughter of the king was possessed by a Bráhman devil, whom none could drive away Yádava, with his pupils, went to see her, and on her being touched by the feet of Rámánuja, the devil departed This pleased the king greatly, and he loaded the youth with rich presents Soon after, his uncle (mother's sister's husband), Govinda came to the place to carry on a polemical disputation with Yádava. The uncle and the nephew took one side of the question mooted and the teacher the other, and the result was a breach between them. The teacher also coveted the wealth of the pupil, and so the latter, by the advice of his uncle, went away to Prayága. In the way, when passing through the Gonda forest, he was very much overpowered by fear, when Hari, the lord of Hastigiri, and his consort Lakshmi, assumed the form of wild hunters, and advised him to go back to

Kánchipur On his return he was reconciled to his teacher, but after a time he was induced to become the pupil of a Sannyási named Yamuná Arya who then dwelt at Srírañga, and there he also contracted a friendship with one Purna Achárya

On the death of Yamuná Arya, he returned to Kanchipur, and compiled his great work the *Sríbhashya*, a commentary on the Vedánta Sutras of Vyása Here, on one occasion, his wife Rakshakámbá quarrelled with the wife of Purnácharya, and Ramánuja, taking the side of his friend, sent his own wife away to her father's house At the same time he himself became a Sannyási of the Tridandi sect and established a monastery (maṭha) at Kánchipur, and there he consecrated an image of Hastináthа The people now gave him the title of 'Yatirája,' and his reputation spread far and wide

On one occasion his former tutor Yadava came to see him, and, in the course of a long disputation, was so completely overcome, that he became a pupil of his pupil, and forsaking the world, became a Tridandi under the name of Govindadása

From this time forward Rámánuja was engaged principally in disputations with learned pandits of Southern India who came to him for the purpose, and in making disciples Among his antagonists there were a few Buddhists but the bulk of them were Saivites The Chola king of Sriranga was one of those whom he converted, and made one of his ardent supporters

He devoted also much time to travelling and the following are the places he is said to have visited, viz, Dvárká, Mathurá Sálagráma, Sáketa Vadarikásrama the Naimisha forest Vrindávána, Saradapiṭha, Jagannátha Chitrakuṭa and Delhi (whence a Delhi princess is said to have gone away with him as his disciple, and in love with a pupil of his) and most of the leading towns of Southern India

Rámánuja is said to have established 72 principal maṭhs, dedicating in each the image of his tutelary deity Among these, the image established on the Yádava Hill, was the consequence of a dream, in which Vishnu inspired him to put up a figure of Náráyana This image was consecrated on the 11th of the waxing moon in the month of Chaitra of the Saka year 1012 = 1090 A D

He lived to the age of 120 years, and died on the 10th of the waxing moon of Mágha. Most vexatiously however, the year of death, is not given

The following are the works he is said to have written (1) *Srîbhâshya*, a commentary on the Vedánta Sutras, (2) *Vedântadîpa*, the essence of the Vedanta, (3), *Vedantasara*, the elements of the Vedánta, (4), *Vedartha sangraha* or the true meaning of the Vedas, (5) *Gîtâ bhâshya*, a commentary on the Bhagavad Gita, all these works are still in existence

The concluding sections (76 to 90) of the work give brief notices of the immediate successors of the reformer, from which it would seem that the work was not written until 150 years after his death The followers of Râmânuja are known by the name of 'Sri Sampradâyis,' and their number is very large in the south

It is to be regretted that the work, though very detailed, does not give the year of the pious Yati's birth or death, but the fact of his establishing an image of Nárâyana in Saka 1012 = A D 1090, about the close of his life, would suggest the idea that he lived all through the eleventh century On this subject I quote the following from Wilson's account of the Vaishnava

" The *Smriti Kala Taranga* places the date of Rámânuja's appearance in Saka—1019 or A D 1127 A note by Colonel Mackenzie on an inscription, given in the Asiatic Researches IX 270, places the birth of Ramánuja in A D 1008 various accounts, collected by Dr Buchanan, make it 1010 and 1025 (Buchanan's Mysore 2, 80) and 1019 (ibid 3, 413) Inscriptions make him alive in 1128, (ibid ) which would give him a life of more than a century according to Col Wilks, indeed (History of Mysore 1, 41 note and appendix), he was alive in 1133 The weight of authority seems to be in favour of the more recent date and we may conclude that he was born about the end of the eleventh century, and that the first half of the twelfth century, was the period at which his fame, as a teacher was established.

Beginning श्रीमते रामानुजाय नमः ।

कारिकान्वयगमूलं कारुण्यामृतसागरं ।
श्रीमिशाचार्य्यतनयं रामानुजगुरुं भजे ॥
नाधीतानि च शास्त्राणि न कृतं गुरुपूजनं ।
वक्ष्यामि कृपया विष्णोरनुग्रहकृत् देशिकाः ॥
इन्दिरारमणं देवमिभशैलनिवासिनं ।
सिवलक्षकोटिसहाशं देवराजमहं भजे ॥
अस्ति वैकुण्ठनगरं सर्व्वलोकेषु विश्रुतं । इत्यादि ।

End. गोदा भट्टारिपरकालमुखादिभिर्देवैराचार्य्ययामुनयतीश्वरकूरनाथैः ।
सार्द्धं जगत् करुणया कलिदोषजुष्टं स्वाधीनरङ्गनिलया चकमे ररक्ष ॥
शान्तावरितं शुभदहिचित्रं समस्तमन्मङ्गलपूर्णपात्रं ।
शृण्वन्ति ये भक्तियुता पठन्ति सन्मङ्गलास्ते सततं भवेयुः ॥

Colophon. इति श्रीप्रपन्नामृते रामानुजचरित्रे महाचार्य्यवेदान्तिसंवादे गोदारङ्गेश्वरकल्याणं नाम सवतितमोऽध्यायः । इति प्रपन्नामृतं समाप्तं । संवत् १८६१ ।

विषयः । १ अध्याये,—एकदा वैकुण्ठसदने लक्ष्म्या समुपास्यमानस्य "केनोपायेन वैकुण्ठमिमान् जन्तून् नयाम्यहमिति" चिन्तयतो हरेः पुरतः समुपस्थित फणिराजं समुद्दिश्य पुरा किल लोकसंरक्षणाय मया शङ्खचक्राद्यायुधानि विष्वक्सेनादयश्च प्रेरिता, तदधुना भवानपि भूमाववतीर्य्य लोकान् रक्षितुमर्हतीति समादेशादिकथन ।

२ये अध्याये,—पूर्व्वसागरस्य पश्चिमतीरे योजनत्रयेण व्यवहिते तोण्डीरमण्डले भूतपुरीति नाम्ना प्रसिद्धा पुरी आसीत् । तत्र हारीतान्वय केशवनामकः कश्चिद् भागवतोत्तमोऽनपत्यतया नितरां निर्व्वेदमापन्नः प्रतिवसति स्म । अथैकदा सभार्य्योऽसौ चन्द्रग्रहणकाले भगवन्तमुद्दिश्य इष्टिं चकार । भगवानपि तयेच्छया प्रसादमभ्युपगच्छन् "अहं ते पुत्रो भविष्यामीति स्वप्ने तमेवमब्रवीत् । अथ शेषोऽपि चैत्रशुक्लपञ्चम्यां तत्पुत्रत्वेनावतीर्णो रामानुज इति समाख्यामधिजगाम । ततो लक्ष्मणार्य्यापरनामधेयस्य रामानुजस्य चन्द्रान्यसंस्कारानन्तरं षोडशे वर्षे रक्षकाम्बया सह विवाहकथन । अथ पितृमरणोत्तर तस्य काञ्चीपुरगमनपूर्व्वकं यादवनामकस्य विद्वद्वरस्य समीपे शास्त्राध्ययनकथनञ्च ।

३ये अध्याये,—अथ काञ्चीपुरेशकुमारी ब्रह्मराक्षसोपद्रुतामुपलभ्य तदुपद्रवशान्त्यर्थं यादवस्य सह शिष्यगणैस्तत्र गमनमभ्यर्थिता च । अथ रामानुजस्य चरणस्पर्शमात्रेण अस्तमितोऽयं ब्रह्मराक्षस इति विज्ञाय राजा तस्मै सुवर्णराशिं प्रददौ । अस्मिंश्च समये रामानुजस्य मातृष्वसेयो गोविन्दाभिधान काञ्चीपुरे तेन सह मि-

विषय। लित्वा यादवस्य समीपे शास्त्रार्थं चिन्तयन् तस्थौ। अथैकदा यादवेन सत्यज्ञानादिश्रुतिवाक्यानि अयथार्थतया व्याख्यातानीत्याकलय्य तेन रामानुजस्य विवादः समजनि।

४-६ष्ठे अध्याये,—अथासौ यादवः क्षान्तिकमनागच्छतोऽपि रामानुजस्य गुणोत्कर्षमसहमानस्तन्निधनेच्छया भूय एव तं मधुराचरणैः वशीकृत्य स्वाभीष्टसिद्धये शिष्यैः परामृश्य च प्रयागमुद्दिश्य प्रचचाल। तत्र गोण्डारण्ये गोविन्दस्य उपदेशेन तत्र पलायितस्यापि तस्य असहायतया अत्यर्थं भीतस्य साहाय्यार्थं भगवान् हस्तिगिरिनाथो लक्ष्म्या सह व्याधमिथुनवेशेन तत्राविर्बभूव। सोऽपि तदनुग्रहेण पुनः काञ्चीपुरं प्रत्याययौ। अस्मिन्नेव समये यामुनार्याभिधेयः कश्चित् महात्मा रङ्गनगरे निवासमकरोत्। स हि सर्वसुलक्षणयुक्तं बालकमेकं प्राप्तुकामः सर्वेषु देशेषु शिष्यान् प्रेरयामास। अथ ते रामानुजस्य प्रतिभामाकलय्य तत् सर्वं गुरवे न्यवेदयन्। अवान्तरे गोविन्दोऽपि प्रयागात् प्रत्यागच्छन् कालहस्तिनगरे शिवमेकं प्रतिष्ठाप्य तत्र उवास। अथ काञ्चीपुरं प्रत्यागतोऽसौ यादवो रामानुजप्रभावाद् भीत इव शिष्यमुखेन पुनरेव रामानुजेन सह सख्यं चकार।

७—८मे अध्याये,—अथ यामुनाचार्यः रामानुजदिदृक्षया श्रीरङ्गात् काञ्चीपुरं प्रति प्रययौ। ततः कियद्दूरं गत्वा हस्तिगिरिं ददर्श। तत्र स्वशिष्येण काञ्चीपूर्णेन सह मिलित्वा ततो निर्जगाम। अत्रान्तरे हस्तिगिरिनाथं वरदाभिधानं द्रष्टुकामो यादवो रामानुजादिभिः शिष्यैः सह तत्र समाययौ। काञ्चीपूर्णस्तु तद्दर्शनेन आनन्दमासाद्य यामुनाय तेषां परिचयमदात्। अथ सोऽपि रामानुजसौन्दर्यामृतं निपीय भूय एव श्रीरङ्गनगरं प्राप। एकदा रामानुजः तैलेन यादवस्य अभ्यङ्गं कुर्वन्नेव तत्रत्य 'कप्यास'मिति श्रुतेरर्थं निशम्य नितरां सन्तापमधिगम्य च विचारपराजितेन तेन ततो बहिष्कारितो हस्तिगिरिं जगाम। तत्र च काञ्चीपूर्णस्योपदेशवत् कैङ्कर्येण वरदार्चनाया निरतो बभूव। अथ वृत्तान्तमिममुपश्रुत्य यामुनाचार्यः निजनिर्मितां स्तोत्रावलीं समर्प्य स्वान्तेवासिनं पूर्णाचार्यं तत्र प्रेरयामास। तत्रैकदा वरदस्य पुरतः पठ्यमानं ततस्तोत्रमपूर्वमिति मत्वा गुम्फितमिदं केनेति जिज्ञासुः रामानुजः पूर्णाचार्येण तथा पथि महतेन महापूर्णेन च सह यामुनाचार्यदिदृक्षया रङ्गनगरमुद्दिश्य प्रचचाल। अथ यामुनाचार्योऽपि तत्प्रत्युद्गमनाय कावेरीतीरपर्यन्तमासाद्य तत्र देहत्यागेन स्वजनान् शोकसिन्धौ निमज्जयाञ्चकार। अत्रावसरे रामानुजोऽपि तत्रोपसृत्य गतजीवितं यामुनदेहं पश्यन्नेव तस्य तदानीन्तनाङ्गुलित्रयसङ्कोचकारणं स्वकर्तव्यनिर्णयं श्रीभाष्यरचनादिकं प्रतिज्ञाय तदङ्गुलिसङ्कोचमपाद्य च पुनः काञ्चीपुरं प्रत्याजगाम।

विषयः। १०-१२ अध्याये—रामानुजस्य काञ्चीपूर्णस्य भोजनादिवृत्तान्तवर्णनं। तदुपदे-
शेन रामानुजस्य पूर्णाचार्यदर्शनार्थं पुनरेव रङ्गनगरगमनं। अथ पूर्णाचार्येण
पञ्चसंस्कारदीक्षितो रामानुजः पत्नीकेन सेन सह मधुरं प्राप्य तस्मात् द्राविडागमा-
दीन् अधीतवान्। एकदा कूपात् जलोत्तोलनकाले पूर्णाचार्यभार्यया सह स्वभा-
र्यायाः कलहः समजायत। अत एव कारणात् भार्यासहितः पूर्णाचार्यो भूय एव
रङ्गनगरं प्रतिययौ। रामानुजोऽपि स्वभार्यायां वीतरागो बभूव। अथैकदा
हस्तिगिरिनाथसमर्थपत्नो रामानुजमभ्युपेत्य कश्चिद् ब्राह्मणो बुभुक्षामात्मनो वि-
ज्ञापयन् 'मह्यं भक्तमिति' रामानुजात् तत्र गत्वा च स्वभार्यया तिरस्कृतो-
ऽसौ पुनरेव तत्समीपमाजगाम। अथ विदितवृत्तान्तो रामानुजस्तं 'भो विप्र
त्वमिदं रोपनार्थं पितृगृहं यापय भूय एव मत्पुरतो गच्छ, कथयस्व चेयं तव
पितृगृहे विवाहमहोत्सवो भविष्यतीति' कथितो विप्रस्तथा चकार। रामानुज-
पत्नी तु तत् श्रुत्वा अत्यन्तमानन्दिता यत्नेन तं भोजयामास। अथान्तरं रामानुजो-
ऽपि स्वगृहमागत किंमप्यज्ञानमिव पत्नीमुखात् सर्वं विज्ञाय तदुपायेन तां पितृ-
सद्मनि प्रेरयाञ्चकार।

१३-१५ अध्याये—अथ रामानुजो विगतस्पृहतया गृहधनादिकं सर्वं विहाय
हस्तिगिरिनाथाय प्रसादमुपलभ्य च त्रिदण्डादिग्रहणेन सन्न्यासं चकार। अत एव
काञ्चीपूर्णेन सादरं गृहीतोऽसौ 'यतिराज' इति समाख्यामलमधिगम्य तत्र मठवासी
बभूव। समयेऽस्मिन् रामानुजस्य भागिनेयो दाशरथिस्तथा श्रीवत्सभट्टतनय
कूरनाथश्च हस्तिगिरिनाथाय यतिराजस्य अन्तेवासिनौ बभूवतुः। अथैकदा
यादवाचार्यो हस्तिगिरिनाथदर्शनार्थं रामानुजाश्रमं जगाम। तत्र हि शङ्खचक्रा-
द्यङ्कित रामानुजकलेवरं दृष्ट्वा स प्रोवाच। भो किमिदमवैदिकमनुतिष्ठसि
कुतश्च त्वया निर्गुणं ब्रह्म सगुणतया स्थापितमित्यभिहितो यतिराजस्तदुत्तरदानाय
कूरेशमादिदेश। सोऽपि श्रुत्यादिप्रमाणैः स्वपक्षं समर्थ्य यादवं पराजिग्ये। ततश्च
काञ्चीपूर्णस्य उपदेशात् यादवाचार्यः शरणत्वेन रामानुजं संश्रितवान्। स च
तस्मै सन्न्यासं दत्त्वा गोविन्ददास इति नाम्ना आजुहाव। अथ गोविन्ददासो
यतिवराभ्यनुज्ञया यतिधर्मसमुच्चयाख्यं ग्रन्थं निर्माय वैष्णव लोकं प्रययौ।

१६-२० अध्याय,—अथ यामुनाचार्यपत्ना वररङ्गो रामानुजानयनार्थं हस्तिगिरि
प्रजगाम। तत्र चाभिनयप्रदर्शनादिना सन्तापितादरदत्तवादभीष्टप्राप्तिपूर्वकं रामा-
नुजं गृहीत्वा रङ्गनगरं प्रत्यागत्य च रङ्गनाथाय समुपदीचकार। अथ रङ्गनाथा-
द्विभूतिद्वयलाभपूर्व्वकं यतिराजस्तत्र अवस्थितिश्चक्रे। अथावसरे रामानुजमातृष्व-
सुपुत्रस्य शैवधर्म्मरतस्य गोविन्दस्य वह्वटाद्रिवासिना श्रीशैलपूर्णनामधेयेन वैष्णव

विषय । यतिना सार्द्धं शास्त्रार्थोऽभूत्। तत्र पराजितस्य गोविन्दस्य सन्न्यासग्रहणपूर्व्वकं श्रीशैलपूर्णचरणाश्रयणकथनं । अथ पूर्णाचार्य्योपदेशेन यतिराजस्य परमतत्त्वजिज्ञासया गोष्ठीपुरमष्टादशकृत्वः गत्वापि गोष्ठीपूर्णाचार्य्यादभीष्टमलब्ध्वा परितप्तस्य च तस्य गोष्ठीपूर्णादेशेन पुनस्तत्र गमनपूर्व्वकं मन्त्रार्थप्राप्तिकथनं ।

२१–२३ अध्याये,—यथा गोष्ठीपूर्णेन निषिद्धोऽपि रामानुजः केभ्यश्चिन्मन्त्रं कथयामास । स चैतद्विज्ञाय तमाहूय च प्रोवाच । भोः कथय गुरुद्रोहकरणस्य किं फलं ? रामानुजः प्राह नरकगमनमिति । गोष्ठीपूर्णः पुनराह एवं ज्ञात्वा कथं त्वया तदनुष्ठितं । यतिराजेनोक्तं,——

'पतिष्ये एक एवाहं नरके गुरुपातकात् । सर्व्वे गच्छन्तु भवतां कृपया परमं पदम्' ॥

इति । निशम्यैतत् गोष्ठीपूर्णो नितरां प्रीतिमावहन् हर्षभरेण 'मन्नाथ' इति तस्य नामान्तरं विधाय व्याजहार,—अद्यारभ्य लोकेऽस्मिन् वैष्णवदर्शनमिदं रामानुजार्य्यसिद्धान्तमिति ख्यातं भविष्यतीति । अथ दाशरथिः यतिवरस्यादेशेन पूर्णाचार्य्यसुतायाः गृहकर्म्मकरणार्थं तस्याः श्वशुरालयेऽवस्थानञ्चकार । ततैकदा केनचित् श्रुतिविरुद्धार्थकारिणा वैष्णवेन सह विचारे लब्धजयश्रीरसौ भूय एव रामानुजस्य चरणावभ्युपेत्य वैष्णवदास इति नामान्तरं प्राप । अथ रामानुजपुत्रस्य सुन्दरबाहोः मालाधरादीनाञ्चादिग्रहणकथनं । तत्र मालाधरप्रमुखात् रामानुजेन शठकोपाचार्य्यकृतसहस्रगीतव्याख्यानश्रवणञ्च ।

२४–२७ अध्याये,—रामानुजस्य गद्यत्रयरचनाकथनं । अथ रङ्गनाथसेवार्थ्यापहारकाणां दुष्टानां दम्भनक्षिप्तानां रामानुजनिधनार्थं तस्मै विषान्नदानं, तस्य च ततः परित्राणादिकथनञ्च । अथैकदा यज्ञमूर्त्तिरिति श्रुतः कश्चिन्मायावादी कृतसन्न्यासोऽपि दिग्विजयार्थं प्रवर्त्तमानः सह रामानुजेन शास्त्रार्थं कर्तुमना रङ्गनगरमाजगाम । स हि अष्टादशदिनानि यावत् शास्त्रार्थं कृत्वा रामानुजप्रभावेण विमुग्धोऽसौ तच्छिष्यतां स्वीचकार । रामानुजोऽपि ब्रह्मनिर्गुणत्ववादनिरसनमद्वैतवादादिखण्डनञ्चोपदिश्य तं भूय एव त्रिदण्डसूत्रादिकं ग्राहयामास । अपि च तस्मै देवराज–देवमन्नाथ-मन्नाथयति नाम त्रयं प्रदाय मठोऽन्यस्मिन् तं स्वामिनं चकार । अथ तत्र पुण्याख्यनगरात् वैष्णवानामनन्ताचार्य्यादीनामागमनकथनं । ततो रामानुजाज्ञया देवराजो द्रविडभाषया ज्ञानसारप्रमेयसारेत्यभिधानं ग्रन्थद्वयं चकार । तथा तदाज्ञया अनन्ताचार्य्यो वेङ्कटगिरिगमनपूर्व्वकं तत्र वृन्दावनं विधाय वङ्कटेशस्य रामानुज इति नामान्तरं कृत्वा तत्र वासमकरोत् ।

२८–३० अध्याय—अथ रामानुजः वेङ्कटाद्रिगमनपुरःसरं वेङ्कटेशं समभ्यर्च्य दिग्भ्रमणार्थं गन्तुकामश्च पथि स्थितां देहलीनगरीं प्राप्य त्रिविक्रममवन्दत ।

विषय । ततोऽसौ धर्मदर्शनार्थं यामं प्राप्य वरदाचार्ययज्ञेशनामानौ स्वशिष्यौ विदितप्रवृत्ती चकार । अथ यतिराजः केनाप्यपराधेन यज्ञेशगृहदर्शनमविधाय वरदस्य गृहं प्रययौ । तत्र अनुपस्थितेऽपि तस्मिन् तद्भार्या भक्तातिशयदर्शनेन अत्यर्थं सन्तोषमापन्नोऽसौ भोजनादिकं व्यधात् । समनन्तरं ततो हस्तिगिरिं प्राप्य काञ्चीपूर्णादिभिः सह साक्षात्कारं विधाय च कापिलतीर्थमुद्दिश्य प्रचचाल । तत्र चोपस्थितोऽसौ कञ्चित्कालमुवास । अथ तद्देशाधिपतिः विट्ठलदेवो रामानुजस्य शिष्यत्वमभ्युपगम्य तस्मै तोण्डीरमण्डलादिग्राममुपजहार । अतश्च यतिवरस्य हस्तिाचल-रङ्गनगरादिष्वागमनकीर्तनं ।

२१-२३ अध्याये—अथ यदा रामानुजेन बहुशोऽनुरुद्धोऽपि तन्मातुलपुत्रो गोविन्दो गार्हस्थ्यं नाभ्यनन्दत, तदा तस्य सन्न्यासाश्रमग्रहणस्य वृत्तान्तकथनं । अथ कूरेशमात्मसहायस्य रामानुजस्य शारदापीठगमनानन्तरं तत्रत्यान् पण्डितान् विजित्य ततो बौधायनकृतब्रह्मसूत्रवृत्तिपुस्तकमादाय रङ्गनगरं प्रत्यागच्छतस्तस्य अनुगामिनः शारदापीठीयविबुधा बलादेव तत्पुस्तकं सङ्गृह्य शारदापीठमधयु । तदनेनात्यर्थं विषादमापन्नस्य रामानुजस्य पुरतः कूरेशेनोक्तं, भगवन्! मया खलु रात्रिकालेषु तत् पुस्तकं तत्त्वतो दृष्टं, भवत्कृपया तत् सर्वमद्यापि हृदये लिखितमस्तीति । एतच्छ्रुत्वा रामानुजो बौधायनवृत्तिलिपिकरणाय तमादिदेश । समनन्तरञ्च रामानुजो बौधायनमतानुसारेण श्रीभाष्य, वेदान्तदीप, वेदान्तसार, वेदार्थसङ्ग्रह, गीताभाष्यञ्च रचयाञ्चकार । अथ बहुभिः शिष्यैः परिवृतस्य तस्य शास्त्रार्थेन दिग्विजयार्थं प्रयाणवर्णनं । तत्र चोलमण्डल पाण्ड्यमण्डल कुरुकानगरादिस्थितानां पण्डितमण्डलीनां विचारपराजितानां रामानुजसमीपात् कैङ्कर्यधर्मग्रहणकथनं । ततो रामानुजस्य कुरङ्गनगराधिपतिं दीक्षितं विधाय केरलदेशगमनकीर्तनं ।

२४-२६ अध्याये,—अथ रामानुजस्य द्वारका मथुरा शालग्राम साकेतनगर-बदरिकाश्रम-नैमिषारण्य वृन्दावनादिगमनकथनं । अथासौ पुनरेव शारदापीठमाससाद । तत्र वाग्देवी आविर्भूय 'कप्यासश्रुतितात्पर्यं वदेति' स्वयमेव तं पप्रच्छ । अथ तत्तात्पर्यश्रवणेन प्रसादमापन्ना देवी श्रीभाष्यं स्वशिरसि संस्थाप्य सङ्गृह्य च पाणिभ्यां तत्पादयुगलं भाष्यकार इति तन्नामकरणं विदधे । तत्र भाष्यकारात् तत्रत्यानां पण्डितानां पराजयादिकथनं । अनन्तरं एवमेवाननदेव गतस्य तस्य प्रच्छन्नरोगतगणविजयानन्तरं रामानुजाख्यं मठं निर्माय तत्र व्यवस्थानकथनं । अथ स पाञ्चरात्रानुसारेण जगन्नाथस्य नित्यपूजादिकं कारयितुमना तदर्चकानाहूय तथा आदिदेश । तेऽपि तदसम्मताः पलायमानाः जगन्नाथाय

विषय। निवेदयामास। अथ भगवान् रामानुजेन दृष्टं तथा सम्प्रार्थितोऽपि तं ततो निवर्त्तनाय अनुरुरोध। यदा खलु स्थिरनिश्चयोऽसौ स्वव्यवसायात् न निवृत्तो बभूव। तदा निशायां निद्रितं तं योगमायया पुरुषोत्तमक्षेत्रात् कूर्म्मक्षेत्रं प्रेरयाञ्चकार। अथ प्रभातकाले विबुद्धोऽसौ कूर्म्मक्षेत्रमिदमिति विज्ञाय विस्मयमागतः श्रीकूर्म्मनाथं समाराध्य तत्र कतिचित् दिनानि तस्थौ। ततस्तस्य सिंहाचलाहो-बलगरुडाचलादिगमनकथनं। अथ तेन पुनरेव वेङ्कटाचलागमनपूर्व्वकं तत्र शै-वानां निर्व्वासनकरणकथनं।

३०–३९ अध्याये,—कूरेशस्य सर्व्वस्वपरित्यागानन्तरं स्त्रीमात्रसहायस्य श्रीरङ्गनगरे निवासकथनं। अथ तत्र रङ्गेशप्रसादात् पराशरव्यासयोरंशेन कूरेशस्य यमजौ पुत्रावजायेतां। [illegible] रामानुजस्तत्र गत्वा प्रथमस्य पराशर इति द्वितीयस्य च श्रीरामदेशिक व्यासश्चेति तयोः नाम चक्रे अत्रावसरे गोविन्दस्यापि पुत्रो व्यजायत, रामानुजस्तु पराङ्कुश इति तन्नामकरणं विदधे। अथ रङ्गेशेन अपत्यनिर्व्विशेषतया प्रतिपालितस्य पराशरस्य विवाहादिकथनञ्च।

४०–४२ अध्याये,—अथ रामानुजस्य कृपया मधुरावासिनश्च धनुर्दासस्य सह भार्य्यया वैष्णवत्वसिद्धिवर्णनं। एकदा रङ्गेश्वरस्य प्रीत्यर्थं महान् उत्सव आसीत्। तत्र यतीश्वरः स्वयमेव धनुर्दासमवलम्ब्य स्वयमेव मठोत्सवं प्रदर्श्य च पुनरा-गमनसमये तेन सह स्वमन्दिरं प्रविवेश। अथ कुतोऽयं धनुर्दासः यतिपतिनैवं सम्मानित इति जिज्ञासुना वैष्णवानां पुरतो यतिपतिना तस्य तत्पत्न्याः वैराग्यमा-हात्म्य गुणकीर्त्त्यैकदेशकथनं। अथ गोष्ठीपूर्णेन मूकाय निजगुरुचरणं प्रदर्श्य तस्मै मोक्षोपायं कथयामासेति इत्याकीर्त्तनं। चोलदेशाधिपतेः क्रिमिकण्ठस्य उत्पातादिकथनञ्च।

विषयः। येति चत्वारः प्रधानकल्पा आसन्। गोविन्दस्य परलोककथनं। पराशरकृतमाधा-
वादिपराजयकथनं। माधवदासस्य वृत्तान्तकथनं। स हि सहस्रनामभाष्य विष्णु-
पुराणमं, षट्श्लोकी, श्रीस्तुति, रत्नकोषश्चेति ग्रन्थपञ्चकं कृतवान्। पूर्व्वाचार्य्याणां
द्राविडभाषया ग्रन्थरचनाकारणकथनं। तत्र भगवद्विषयकर्णोरन्योन्य शापदान-
वृत्तान्तकीर्त्तनं। श्रीवैष्णवस्य द्राविडाम्नायपठनावश्यकताकथनं। सङ्क्षेपेण पूर्व्वा-
चार्य्याणां चरितकीर्त्तनमुखेन लक्ष्म्याः द्रविडेषु गोदारूपेण अवतारकथनं।

७६-९० अध्याये,—अथ सारादीनां जन्मकथनं। तेषां देहलीनगरे भगव-
द्दर्शनवृत्तान्तकथनं। भक्तिसारस्य जन्मादिकथनं। कणिकृष्णस्य जन्मादिकथनं।
भक्तिसारस्य द्रविडभाषया ग्रन्थप्रणयनकथनं। अथ भगवता भक्तिसाराय महदाख्य-
भक्तोपदेशदानकथनं। भक्तिसारात् रुद्रस्य पराजयकथनं। भक्तिवैभवातिशय-
वर्णनं। कुलशेखरस्य जन्मादिकथनं। तत्र तत्कृतश्रीरामप्रत्यक्षकरणादिवृत्तान्त-
कीर्त्तनं। भट्टनाथस्य जन्मादिकथनं। पद्मराजस्य जन्मादिविवरणकथनमुखेन
तत्सभायां विष्णुतत्त्वनिरूपणवृत्तान्तकीर्त्तनञ्च॥

- -

कह्लारोत्पलकैरवाम्बुजदल++न्दसमञ्जरी
कोदण्ड करपङ्कजेन दधती पुण्ड्रेक्षु++ङ्कव ।
शोवर्णाङ्कुशपाशपाणिररुणामारक्तवस्त्रावृता-
माताधाम्बुजसंस्थिता चिनयना चन्द्रार्द्धचूडा भजे ॥
प्रणम्य शङ्कराचार्य्यचरणाम्बुरुहद्वय ।
आनन्दलहरीस्तोत्र विष्णुपक्षेऽपि लक्षयेत् ॥
तत्र भवानीपक्षे,—ननु हरिहरविरिञ्च्यादिदवद्दन्दमपास्य किमिति कात्यायनी
स्तुतराचरणमिति शिष्याशङ्कामपनिनीषुराह । शिव शक्त्येति ।

End जननीति सम्बोधन वा । १०२ ।
यथास्मदीयमवलोक्य ततोऽपि सम्यगर्थान्तर समधिगम्य न निन्द्यमेतत् ।
अत्यन्तदुर्गमतरे पथि सञ्चरन्त स्खाल्या भवन्ति कवय पुरत प्रयाता ॥
भद्रो न ते जननि चास्ति जनार्द्दनन वैकुण्ठनाथपरतापि कृताच तेन ।
मातर्भवानि करवाणि ततोऽच काकु माकुण्ठितोऽम्बु मयि ते करुणाकटाक्ष ॥

Colophon इति श्रीनरसिंहविरचिता आनन्दलहरीटीका समाप्ता । श्रीरस्तु ।
सवत् १८२९ । फाल्गुणे ।

विषय । शङ्कराचार्य्यकृतानन्दलहर्य्या भवानीपक्षे विष्णुपक्षे च व्याख्यान ।

---

## No 1733 पदार्थादर्श ।

Substance, country made paper, 12½ × 4 inches Folia 112 Lines 8 on a page Extent 5781 ślokas Character, Nagara Date ? Place of deposit, Feglora, Post Lalgolá Zilá Murshidabad Devadatta Trevedi Appearance, old Prose Correct

*Padárthádarśa* A commentary on the Sáradá tilaka,—a Tantra By Rághava Bhatta The Tantra is in great repute in the North-Western Provinces and appealed to as an authority of great weight, though it forms not one of the 64 original Tantras

Beginning श्रीकण्ठ निजनाण्डवव्यमसमाग्रे हासमादोद्दयं
पद्मनख पुनुकारमन्दियमया सम्रासमार्च गुड ।
मन्दान्दोलितदुग्धसिन्धुलहरीलीलासम शोलय
मामाद्योत्तमलालभातु +++ मूर्त्ति भवान्या सार्थ ।

उपसेवनीयमपि भि सनकादिमुख्यैर्योगैरगम्यमविनयरमादिभून ।
अपारकृत्रिगमसारविचारसार गौर महा मनसि मे मुदमाटघातु ॥
भद्राय भवता भूया भारती भक्तिभाविता ।
स्मृतेरुज्जृम्भते यस्या वागिलामोऽतिदुर्लभ ॥
शारदातिलके तन्त्रे गुरूणामुपदेशत ।
पदार्थादर्शटीकेय राघवेण विरच्यते ॥
सम्प्रदायागत किञ्चिद् भणितागमसम्मत ।
यदुक्तमत्र तत सन्ता विचारयितुमर्हथ ॥
अथेश्वर सर्वा अपि श्रुती भवपाशबद्धाना स्वर्गाय मुक्तये च समुपदिशन्ति स्म । अन्येषा स्मृतिशास्त्रादीना तन्मूलकत्वेन तदर्थप्रतिपादकत्वेन च प्रामाण्यमिति सुप्रसिद्धतर ॥ इत्यादि ।

End मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाणि भवन्ति आयुष्मत्पुरुषकाणि चेति भगवत्पतञ्जलिवचनात् । वन्दनीया गिर पूजनीया गिरम ।

Colophon इति श्रीराघवभट्टविरचिता पदार्थादर्शटीका सम्पूर्णा । शुभम ।

विषय । लक्ष्मणदेशिकेन्द्रकृतशारदातिलकव्याख्यान ।

ticularly avoided Then come detailed notes on all the leading places of Hindu pilgrimage in India

Beginning गौरी दृगालोकनवीनलज्जा सञ्जातनानाविधभावजातं ।
वन्दे विरामस्मृतिभूतभीत्या पञ्चाननं पञ्चशरप्रपञ्चं ॥
सञ्चिन्तयामि सततं कमनीयमूर्त्तिं कान्ता' कथा श्रुतिपथं मम ते विशन्तु ।
रम्य +++ खलु नाम मदीयमौलौ मातर्भवानि करवाणि पदारविन्दे ॥
पुराणस्मृतितन्त्राणि विलोक्य बहुसङ्ग्रहान् ।
नत्वा गणेशं वागीशस्तनुते तीर्थकौमुदी ॥
अथ तीर्थानि । गारुड़े । सूत उवाच । सर्वतीर्थानि वक्ष्यामि गङ्गा तीर्थोत्तमोत्तमा । इत्यादि ।

End. अत्र त्यजन्ति ये प्राणान् जलाग्निस्थलगोचरे ।
तेऽपि स्वर्गमयाप्यादौ +++ चिरमर्हति ॥
सन्मानं विविधं धनञ्च लभते यः कामरूपेश्वराद्
यः स्मार्त्त +++ नितान्तममले नारायण कारणे ।
यस्त्रोर्व्वीं कविता निसर्गमधुरा सत्तर्कगर्भा गिरो-
वागीशस्य मनोरमा कृतिरियं तस्यास्तु सत्प्रीतये ॥

Colophon इति महामहोपाध्यायभट्टाचार्य्यश्रीसिद्धान्तवागीशविरचिता तीर्थकौमुदी समाप्ता ।

विषय । तीर्थनिरूपणं । तीर्थफलभागिनिरूपणं । तीर्थेषु वर्ज्जनीयकथनं । गङ्गागर्भनिरूपणं । विशेषयात्राफलकीर्त्तनं । तीर्थयात्राविधिकथनं । यात्रादिने नान्दीश्राद्धविधानं । तद्दिने पार्व्वणश्राद्ध कर्त्तव्यमिति व्यवस्थापकानां गणेशरविमिश्रविद्यापत्युपाध्यायवाचस्पतिमिश्राणां सन्दूषणञ्च । तीर्थयात्रायां वर्ज्जनीयानि । तत्र निषिद्धानि च । तीर्थस्नानविधिकथनं । तर्पणनिरूपणं । तत्र तिथिविशेषे पर्व्वणि च गङ्गादिस्नानविधानकथनं । प्रयागादिकथा च । अर्द्धोदयादियोगलक्षणं । मौलीरक्षाद्रिकस्वर्णत्यागकार्य्यरक्षाविधानं । तीर्थश्राद्धविधानं । तीर्थे उपवास-विधिकथनं । मुण्डननिषेधकथनञ्च । तीर्थप्रतिग्रहे मन्त्र प्रयोगविधिकथनं । आषाढ़ान्त पञ्चतीर्थविधिकथनं । कामरूपतीर्थमाहात्म्यकथनं । कामरूप-निर्णयः । तत्र दानादफलकथनञ्च । कन्दर्पपादमाहात्म्यतीर्थविधि । एवं मेघ-नादादिमाहात्म्यतीर्थविधानकीर्त्तनं । तत्र तत्र गयादितीर्थविधानकथनञ्च ।

---

## No 1735 प्रायश्चित्तेन्दुशेखरः ।

Substance, country made paper, 9½ × 4½ inches Folia, 92 Lines, 8 on a page Extent, 1,876 s'lokas Character, Nágara Date, Sm 1838 Place of deposit, Lálgola, Zilá Murshidabad Kálicharana Upádhyaya. Appearance, fresh Prose and verse Correct

*Práyas'chittendu s'ekhara* An epitome of all the offences for which expiations have been ordained in the Smritis, and the nature and mode of performance of those expiations By *Nagoji Bhatta, son of Siva* Bhatta by Satí Deví The author was a distinguished grammarian, and author of a great number of works on grammar and law, besides several commentaries The offences noticed are all domestic and civil, and not religious arising from omission or flaws in the performance of Vedic rites The work is one of a series of texts on the Smriti.

Beginning नत्वा सतीं शिवं दुण्ढिं भारतीं पितरौ तथा ।
नागोजी कुरुते रम्यं प्रायश्चित्तेन्दुशेखरं ॥
तत्र प्रायश्चित्तलक्षणं । यद् यथाविध्यनुष्ठितं मादुपचितमघम् नाशयत्येव तत् प्रायश्चित्तं ।

End. गङ्गास्नानविष्णुस्मरणं तन्नामजपादिकं सर्व्वपापप्रायश्चित्तमिति सर्व्वं शिवं ॥

Colophon इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृतप्रायश्चित्तेन्दुशेखरः समाप्तः ।
सम्वत् १८३८ ।

विषय । प्रायश्चित्तस्वरूपविचारः । सवत्सरप्रायश्चित्ताकरणे व्यवस्थाकथनं । प्रायश्चित्तं यथोक्तमेव कार्य्यं स्नेहलोभादिना अनुग्रहकरणे प्रत्यवाय इति निरूपणादिकं । कामतः प्रायश्चित्तादिभेदकथनं । जातिभ्रंशकरपापनिरूपणं । महापातकोपपातकादिनिरूपणं । सुरापानतुल्यपातित्यजनकक्रियानिरूपणं । एवं स्वर्णस्तेयादितुल्यपातकादिनिरूपणञ्च । ज्ञानतो ब्रह्महत्यादिकर्म्मविपाककीर्त्तनं । कृच्छ्रादिव्रतलक्षणं । दशविधनियमकीर्त्तनं । प्रायश्चित्तपूर्व्वाङ्गकृत्यं । अनुतापादिविधानं । सर्व्वपापप्रायश्चित्तकथनं । अभ्यासे प्रायश्चित्तविधिकीर्त्तनं । गोवधप्रायश्चित्तकथनं । नीलीरक्तवस्त्रधारणादौ प्रायश्चित्तं । रजस्वलादिगमने दिनभेदेन प्रायश्चित्तभेदनिरूपणं । गर्भाधानादिचूडाकरणान्तसंस्कारे दिगम्बरनग्नस्त्रीदर्शनादौ प्रायश्चित्तकथनं । निषिद्धकाष्ठेन दन्तधावने प्रायश्चित्तकथनं । गृहीतव्रतस्य प्रमादादिना भङ्गे प्रायश्चित्तकथनं । विप्रस्य शूद्रादिवृत्त्या धनार्ज्जने प्रायश्चित्तं । शूद्रस्य द्विजवृत्त्य-

विषय । मलम्लने प्रायश्चित्तं । देवागारशिलादिना खट्टकरणे प्रायश्चित्तं । निषिद्धदिने दन्तधावने प्रायश्चित्त । विवाहात् पूर्व्वं कन्याया रजोदर्शने प्रायश्चित्त । सुराघ्राण-सुरापानादौ प्रायश्चित्त । नित्यस्नानमकृत्वा भोजनादौ प्रायश्चित्तं । भार्य्यया सोदरादिना वा सार्द्धं भोजने प्रायश्चित्तं । पूर्व्वदिनभुक्तान्न वमने प्रायश्चित्त । गोमांसादि-भक्षणे प्रायश्चित्त । पलाण्डुभक्षणादौ प्रायश्चित्तं । भोजनानन्तर विट्स्पर्शादौ प्रायश्चित्त । रजककर्म्मकारादीनामुच्छिष्टस्पर्शे प्रायश्चित्त । उच्छिष्टभोजनादौ प्रायश्चित्त । कुक्कुटकुक्कुर्य्यादिस्पृष्टान्नभोजने प्रायश्चित्त । यज्ञोपवीतच्छेदनादौ प्रायश्चित्त । काष्ठ-वस्त्रादिना हीनशूद्रस्पर्शे प्रायश्चित्त । चण्डालादिदर्शनप्रायश्चित्तं । चण्डालगृह-प्रवेशे प्रायश्चित्त । चण्डालादिभाण्डस्पृष्टाम्बुपानादौ प्रायश्चित्त । मक्षिका-केशादि-दूषितान्नभोजने प्रायश्चित्त । बिडाल-काकाखुश्वाद्युच्छिष्टभोजने प्रायश्चित्त । आपदि विप्रस्य शूद्रगृहभोजने प्रायश्चित्त । विष्णुनिवेदितभक्षणे प्रायश्चित्त । शूद्रशवानु-गमनादौ प्रायश्चित्त । आत्मघातकपुत्रेण प्रायश्चित्त कर्त्तव्यमिति कथनं । उच्छिष्ट-विप्रस्य अनुच्छिष्टशूद्रस्पर्शे प्रायश्चित्त । उच्छिष्टस्य सूर्य्यादिदर्शने प्रायश्चित्तं । उच्छिष्ट-तैलाभ्यक्तादीनां मूत्रत्यागे प्रायश्चित्त । रजस्वलानियमविधान । जातिभ्रंश-करपापानुष्ठाने प्रायश्चित्त । अपात्राय कन्यादानप्रायश्चित्त । गोवधादिप्रायश्चित्तं । रोधादिप्रायश्चित्तकथनञ्च । गोवधापवाद । आत्मघातक । तत्र प्रायश्चित्तविधाना-दिक । स्तेयप्रायश्चित्तं । [illegible]प्रायश्चित्त । परिवेदनप्रायश्चित्तं । भृतकाध्या-पनप्रायश्चित्तं । परदारकरणे प्रायश्चित्त । मनुष्यादिवधप्रायश्चित्त । स्त्र्यादिवधप्राय-श्चित्तं । वृक्षच्छेदनप्रायश्चित्तं । शूद्रादिदर्शने प्रायश्चित्तकथनं । मृतभर्त्रादिप्रायश्चित्तं मिथ्याभिशंसने प्रायश्चित्तकथन । पुत्रविक्रयप्रायश्चित्तं । अयाज्ययाजनप्रायश्चित्तं । मातापितृपरित्यागे प्रायश्चित्तं । स्वाध्यायपरित्यागप्रायश्चित्तं । निन्दितान्नभोजनादौ प्रायश्चित्तं । उच्छिष्टाभक्ष्यभक्षणप्रायश्चित्त । अशुचिस्पृष्टस्पर्शे प्रायश्चित्तं । यवनाद्यन्न-भोजनप्रायश्चित्तं । श्राद्धभोजनप्रायश्चित्तादिकथन । जन्ममरणाशौचान्नभोजनप्राय-श्चित्तं । वशीकरणाभिचारादौ प्रायश्चित्तं । ब्रह्महत्यासुरापानादिमहापातकप्राय-श्चित्त । संसर्गप्रायश्चित्तकथनञ्च ।

---

*Suddhi-viveka* A treatise on impurity of the person arising from birth or death in one's family, or from causes confined to one's person A Smriti compilation By Rudradhara The author wrote several other treatises under the generic nature of Viveka

Beginning. हरतु दुरितजातं केशवस्यैकवाहुर्विपुलगलविलग्नः कश्चिन मम्मविष्टः ।
असुपवनमिवाप्य प्राशितुं सम्प्रवृत्तः कुवलयदलनील पन्नगीयो भुजङ्गः ॥
चिरन्तनानेकनिबन्धमिदं सुसम्प्रदायानुगतं स्फुटार्थं ।
नत्वा हरिं रुद्रधरेण सम्यक् वितन्यते शुद्धिविवेक एष ॥
सन्त्येव रत्नाकरपारिजातमिताक्षराचारलताद्योऽन्ये ।
तथापि तत्रान्तनमानमाना भवेत प्रमोदाय सत प्रयास ॥
शुद्धिसावदखिलविहितकर्माधिकारापादको धर्म्मविशेष । इत्यादि ।

End अत्र च समस्ते एव प्रकरणे तत्तत्कार्य्यविशेषे एव अशौचाभाव, न सर्व्वकार्य्ये अशौचाभाव इत्यवधातव्यम ।

Colophon इति रुद्रधरकृतौ शुद्धिविवेके जननमरणयो शुद्धिपरिच्छेद । इति शुद्धि विवेक सम्पूर्ण । सवत् १८५९ ।

विषय । शुद्धिपदार्थनिरूपण । अशौचस्वरूपनिरूपण । सामान्यतश्चातुर्वर्ण्यस्य अशौच-निरूपण । जननाशौचविधिः । यावज्जीवाशौचकथन । बान्धवाशौचविधान । त्र्यहाशौचविधि । गर्भस्रावाद्यशौचविधि । मृत्युविशेषाशौचविधान । सद्यःशौच विधि । सपिण्डाद्यशौचविधि । निर्हाराद्यशौचविधि । अशौचाभावकथन । धनशौचिन ।

---

## No 1737 मार्त्तण्डवल्लभा ।

Substance, country made paper 11 × 5 inches Folia, 120 Lines, 8 on a page Extent 2,842 s'lokas Character Nágara Date, Sam 1847 Place of deposit, Lálgola Zila Murshidabád, Pandit Kalicharana Upadhyaya Appearance fresh Prose Correct

*Martanda vallabha* A commentary on his astronomical treatise called Muhurta martanda By Narayana son of Ananta Agnihotri, grandson of Hari, great grandson of Srikrishna, and great great-grandson of Ananta of the Kausika gotra, and an inhabitant of the town of Sarasanan, modern Saran The work was completed in the Saka year 1484—A. D 1549

Beginning मार्त्तण्डोऽवतु वाच न पादैर्जीयतमोदर ।
द्वत्तवद्दतनु मेघोऽभीष्टदो विश्वलोचन ॥
अर्थद्वयवाची । तत्र प्रथम सूर्य्यपचे । मार्त्तण्ड श्रीसूर्य्य नोऽस्माकं वाचमवतु
रचतु । किं लचणो मार्त्तण्ड । द्वत्तवद्दतनु । द्वत्ते मण्डले बद्धा तनु यन स
तथा । तथा च स्रुतो इत्यादि ।

End अथैतद्ग्रन्थमङ्गीकरणार्थं बुधप्रार्थना । पूर्व्ववाक्यार्थमिति । सुगम ।
आसीत सारमणीरनामनगरे श्रीकौशिकस्यान्वय-
ऽनन्तो राजसभेऽपि पूज्यचरणो माध्यन्दिनग्रामणी ।
श्रीकृष्णस्तनय श्रुतिस्मृतिविदामग्रसरेभ्यो हरि-
सत्पुत्र श्रुतिवित तदात्मजवरोऽनन्ताग्निहोत्री गुरु ॥
सत्पुत्रस्तदनुग्रहात्तधिषणो नारायणो + पर
ग्रामे शिष्यगणेच्छया निजकृतग्रन्थस्य टीका स्फुटा ।
चक्रे + कृपया परोपकृतय शोध्य इदक्त बुधै-
+ दृत्तस्य विलोक्य भाष्टमपि ते कुप्यन्ति ना सज्जना ॥
मुखनिधिपुरुषार्थच्मासमाभि समाभि •
१४८४ परिमितशककाल जातमार्त्तण्डटीका ।
लिखति पठति विप्र सोऽत्र भूत्वा धरित्र्या
मुखनिधिपुरुषार्थच्मासमानाषमावान ॥

Colophon इति श्रीमदनन्तात्मजचातुर्मास्ययाजिपुत्रनारायणविरचिते मुहूर्त्तमार्त्तण्डे सहज
टीका मार्त्तण्डवल्लभा समाप्ता । सवत् १८४० ।

विषय । निजकृतमुहूर्त्तमार्त्तण्डस्य व्याख्यानं ।

---

## No 1738 श्राद्धकाशिका ।

Substance, country made paper 11 × 1½ inches Folia, 80 Lines, 7 on a page Extent 1,520 slokas Character Nágara Date Sa 1808 Place of deposit, Lalgola, Zilá Murshidábád Pandit Kállicharana Upadhyaya Appearance, fresh Prose and verse Correct

*Sráddha kásiká* A dissertation on the rite of Sráddha according to the rules of Katyayana By Krishna Misra, son of Vishnu Mis'ra, grandson of Atisukha, and great grandson of Nityananda. The several ancestors named were great Smriti scholars and authors

Beginning यस्य प्रसादपयसा क्रतुपादपास्ते कात्यायनं मुनिवरं शिरसाभिवन्दे।
सिक्ता फलन्ति यजुषामिह याजकानां स्वर्गोद्भवानि विविधानि फलान्यजस्रं॥
कर्कोपाध्य++गभीरवचने सूत्र यतोऽस्मादभू-
दुर्बोधश्च ततो ह्लादृष इति व्याख्या तथाप्यस्फुटा।
भूयोऽपि प्रतिषेधकारिवचनैः सान्निमया कामिका
सूत्रस्यापरिभाषयोऽधुगतिमिरध्वंसमाय तन्यते॥
सूत्रार्थग्रन्थकाद्याकोविंदग्रयोक्तिप्रकाशनात्।
अस्यान्वार्थमिह नाम ग्रन्थस्य श्राद्धकाशिका॥
नित्यानन्द इतीह याजकवरो जातस्तदीय सुत
स्मार्त्ताग्नौ विदितक्रियोऽतिसुख इत्याख्यो जगत्यद्भुतः।
तत्पुत्रोऽप्यभवत् स्मृतौ सुचतुरः शास्त्रेष्वधीतिः श्रुतौ
विष्णुर्मिश्र इमं निबन्धमकरोत् छष्णः कृती तत्सुतः॥
अत्र पूर्वां पौर्णमासीमुत्तरामुपवसदित्यादिना श्रौतकर्माण्युपदिश्य। अथातो गृह्यस्थालीपाकानामित्यादिना स्मार्त्तान्याख्याय अवशिष्टं श्राद्धकर्म कर्त्तव्यमिति सूत्रमारभते। अपरपक्षे श्राद्धं कुर्वीत।

End प्रत्याब्दिकं निवृत्ते तु यथाविधि समाचरेत्।
अनयोर्भिन्नतन्त्रत्वात् स्थालीपाकाग्निहोत्रवदिति॥

Colophon इति श्रीकृष्णमिश्रविरचितायां श्राद्धकाशिकायां सूत्रवृत्तौ एकोद्दिष्टश्राद्धं समाप्तं। सवत् १८३८।

विषय। कात्यायनप्रणीतगृह्यसूत्रीयश्राद्धप्रकरणस्य व्याख्यानं।

---

## No 1739. हनुमन्नाटकं, वा महानाटकं।

Substance, country-made paper 11 × 4¼ inches Folia 46 Lines, 12 on a page Extent, 1,775 *s*lokas Character, Nagara Date Sm 1844 Place of deposit, Lalgola, Zila Murshidabad Pandit Kalicharana Upadhyaya Appearance, fresh Prose Incorrect

*Hanumannataka* alias *Mahanataka* A drama on the exploits of Ráma It is said that this work was originally composed by Hanuman, the monkey general of Rama, and inscribed on slabs of stone, but Valmika, happening to read it, thought it too exquisite for human perusal, and, not without some apprehension lest it should supersede his own epos on the subject, caused the stones to be thrown into the sea Thus the

work was lost for a long time The stones, however, were recovered during the reign of Bhoja Raja of Dhára, and decyphered and restored by one of his court pandits named Damodara Misra Its original name was not found out, and so it was called after its author's name On account of its great excellence it was also called *Mahá nátaka*, 'the Great Drama'. According to popular tradition, Kálidása of Bhoja's court was the restorer, but this is contradicted by the commentator Some Bengali pandits believe the restorer to have been one Madhusúdana Misra, two MSS, however, contradict that opinion.

Beginning कल्याणानां निधानं कलिमलमथनं पावनं पावनानां
पाथेयं यन्मुमुक्षो सपदि परपदप्राप्तये प्रस्थितस्य ।
विश्रामस्थानमेकं कविवरवचसां जीवनं जीवनानां
बीजं धर्म्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ॥
पातु श्रीस्तनपत्रभङ्गमकरीमुद्राङ्कितोरःस्थलो
देव सर्व्वजगत्पतिर्मधुवधूवक्त्राब्जचन्द्रोदय ।
क्रीडाक्रोडतनोर्नवेन्दुविशदे दंष्ट्राङ्कुरे यस्य भू
र्भाति स्म प्रलयाब्धिपल्वलतलोत्खातैकमुस्ताकृति ॥
यं शैवा समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटव कर्त्तेति नैयायिका ।
अर्हन्नित्यथ जैनशासनरता कर्म्मेति मीमांसका
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरि ॥
आसीदुद्भटभूपतिप्रतिभटप्रोन्माथिविक्रान्तिको
भूप पङ्क्तिरथो विभावसुकुलप्रख्यातकेतुर्बली ।
क्ष्मां सर्व्वरभूरिभारहतये भूरिदया पुत्रतां
यस्य स्वांशतयो विधाय निखिलं पूर्व्वं चतुर्द्धा विभु ॥ इत्यादि ।

End चतुर्दशभिरेवाङ्कैर्भुवनानि चतुर्दश ।
श्रीरामनाटकं धत्त कथमेतन्न निर्म्मलं ।
रचितमनिलपुत्रेणाथ वाल्मीकिनाब्धौ निहितममृतबुद्ध्या प्राङ्महानाटकं यत् ।
सुमतिनृपतिभोजेनोद्धृतं तत्क्रमेण ग्रथितमवतु विश्वं मिश्रदामोदरेण ॥

Colophon. इति श्रीमद्धनुमद्विरचिते महानाटके श्रीरामविजयो नाम चतुर्दशोऽङ्क ।
सम्वत् १८१४ ।

विषय । रामचरितवर्णनं । (कस्मिंश्चित्तु मधुसूदनमिश्रकृतेन नाटकमिदं परं प्रच-

विषयः। जन्मकथनं। कार्त्तिकपौर्णमास्यां चण्डनामकदैत्यशरीरेण चण्डिकाभिधानायाः वीणायाः उत्पत्त्यादिकथनं। महादेवात् तालोत्पत्तिकथनं। नाट्य नृत्त-नृत्यानां पार्थक्यकथनमेषामवान्तरभेदकथनञ्च। ताण्डवलास्ययोरुत्पत्तिकथनं। स्थानविशेषे नृत्यविशेषनियमनं।

४०—४६ अध्याये,—रेणुकामाहात्म्यसूचनाकथनं। रेणुकापूजनविधानादिकीर्त्तनं। असुरगणनिर्ज्जितस्य निर्ज्जरेन्द्रस्य वीराद्याधिना सह संवादादिकथनं। कान्यकुब्जाधिपस्य रेणुराजस्य कन्यात्वेन अदितेर्जन्मग्रहणकथनादिकं। तस्याः एकवीरा रेणुका चेति नामद्वयकथनं। अग्निं प्रति 'सर्व्वभक्षो भवेति' भृगोः शापदानवृत्तान्तकथनं। जमदग्नेर्जन्मविवरणकीर्त्तनं। जह्नुवंशकथनं। ऋचीकवंशकीर्त्तनं। रेणुकास्वयम्बरवर्णनं। तथा सार्द्धं जमदग्नेः परिणयविवरणकीर्त्तनं। रेणुकाकृतकाम्बोजादिदेशजयकथनं। रेणुकायाः पञ्चपुत्रजननकथनादिकं। परशुरामस्य उद्भवादिकथनं।

४७—६१ अध्याये,—तपस्यया सन्तोषितात् महादेवात् परशुरामेण पाशुपतास्त्रप्राप्तिकथनं। सृष्टेः पूर्व्वं विश्वमिदं ज्वालामालाकुलमासीत्। तत्रैकदा महादेवेन सह प्रभारूपायाः कस्याश्चित् नार्य्याः संवादकथनं। जमदग्निरूपेण महादेव एव अवततार इति कथनादिकं। रेणुकावधवृत्तान्तकीर्त्तनं। तस्याः पुनर्जीवनकथनञ्च। मूर्त्तिमता क्रोधेन सार्द्धं जमदग्नेः संवादकथनं। कार्त्तवीर्य्यार्ज्जुनस्य उद्भवादिकथनं। तस्माद् दशग्रीवस्य निग्रहादिवृत्तान्तकीर्त्तनं। अर्ज्जुनकृतकामधेनुग्रहणविवरणं। दत्तात्रेयाश्रमे रामकृतरेणुकामूर्त्तिप्रतिष्ठावृत्तान्तकथनं।

६२—७० अध्याये,—अर्ज्जुनस्य दुर्न्निमित्तदर्शनविवरणकीर्त्तनं। रामकृतमाहिष्मतीपुरीदाहनवृत्तान्तकीर्त्तनं। रामार्ज्जुनयोरद्भुतयुद्धवर्णनं। परशुरामस्य दिग्विजयवर्णनं। तस्य कैलासगमनवृत्तान्तकथनं। राघवेण सार्द्धं समरपराभववर्णनञ्च। स्यमन्तपञ्चकतीर्थवृत्तान्तकथनं। रामतीर्थविवरणकथनं। प्रत्यक्षतां गताभ्यां मातापितृभ्यां सह परशुरामस्य संवादकथनादिकं। यजमानेन रामेण कश्यपाय पृथिवीदानविवरणकथनं।

७१—७५ अध्याये,—विपुलवेदपठनपरस्य ब्रह्मणो रेणुकाश्रमे तपश्चरणवर्णनं। दत्तात्रेयप्रसादेन तस्य वेदप्राप्तिकथनं। पुत्रविक्रयजनितपापेन अजीगर्त्तस्य निरयगमनवृत्तान्तादिकीर्त्तनं। नरकवर्णनं। इन्द्रद्युम्नस्य उपाख्यानकथनं। हेमकुण्डाभिधानस्य विप्रस्य प्रयागतीर्थे पितृलोकदर्शनवृत्तान्तकीर्त्तनं। विष्णोर्देवदेवेश्वरनामप्राप्तिविवरणकथनं। दत्तात्रेयस्य मार्कण्डेयादिभ्यः पद्ममाहात्म्यकथनं। लक्ष्मीसहचरस्य उत्पत्त्यादिकथनं। नाभिकस्य द्विजस्य उपाख्यानकथनं। ब्रह्मज्ञान-

तीर्थमाहात्म्यादिकथन। मूर्त्तिमता हेमगिरिणा सार्द्धं देवाना रेणुकाश्रमगमन-विवरणकथन। शृङ्गवेरपुराधिपते वज्रधारस्य स्वपतेरुपाख्यानकीर्त्तन।

७८–८३ अध्याये—वज्रधारेण शाण्डाल्यगस्य कस्यचित् ब्राह्मणस्य प्राणनाशनवृत्तान्त-कीर्त्तन। शाण्डाल्यगस्य जन्मवृत्तान्तकथनं। यमकिङ्करताडितस्य अन्तरिक्षस्थस्य कस्यचित पुरुषस्य अगस्त्येन सह संवादकथन। भास्करालयमाहात्म्यकथन। तत्र विरमया आगच्छन्त भास्कर दृष्ट्वा उपाया स्त्रीरूपेण पलायनवृत्तान्तकथन। चक्रतीर्थमाहात्म्यकथन। तत्र जम्बूकस्य उपाख्यानकथन। शङ्करतीर्थवर्णन। कोटीश्वरमाहात्म्यादिवर्णन। पटेश्वरमाहात्म्यवर्णनं। कार्त्तिकमासमाहात्म्यकथन। कन्यादानादिमाहात्म्यकथन। विवाहकालादिकथन। कन्याविक्रये महापाप-कथन। उपनयनसंस्कारादिकरणे फलश्रुतिकथन। विद्यादानमाहात्म्यकीर्त्तनञ्च।

इति स्कन्दपुराणीयसह्याद्रिखण्डोत्तरविभागस्य विवरणम।

---

## No 1749 स्कन्दपुराणीयसह्याद्रिखण्डे तुरजामाहात्म्यविभाग.।

Substance, country made paper, 14 × 7 inche. Folia, 67 Lines, 12 on a page. Extent, 4 128 slokas Character Nágara Date, ? Place of deposit, Nasipura, Zillah Murshidabad, Raja Ramachand Siñha Appearance fresh Verse Incorrect

*Turaja Mahátmya* —The history of Turají *alias* Tvaritá, a goddess She was the wife of a Rishi named Kardama On his death she was about to ascend the funeral pile of her lord, but desisted on a celestial voice preventing her She then retired to the Himalaya to pass the rest of her life in devotion A demon encountered her on a peak on the Himalaya, and was so struck by her charms as to be impelled to offer her violence A goddess descended from heaven, and saved her In the course of giving this narrative, the author recounts a number of stories, and the religious merits of a great number of sacred places in Central India A brief account of the Ramáyana is also given The work extends to 15 chapters, and professes to be a part of the Sahyádri Khanda of the Skanda Purína. The name is sometimes written Tulja

Beginning श्रीगणेशाय नमः। नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्॥
षट्पद उवाच। महार्षेन महादेवनन्दनानन्तविक्रम।

स्नाने सर्व्वरोगशान्तिकथन। धारातीर्थस्य उत्पत्तिकथन। तन्माहात्म्यकथनञ्च। धाराया त्रिवेणीत्वकथन। ब्रह्मकुण्डमाहात्म्यकथन। विष्णुतीर्थमाहात्म्यकथन। गौतमस्य विष्णुप्रीत्यर्थं धारातीर्थे तपश्चरणदृत्तान्तकीर्त्तन। गौतमकृतविष्णुस्तोत्र कथन। तत्तपसा गौतमस्य इन्द्रद्युम्नरूपेण जन्मग्रहणकथन। औदुम्बरतीर्थ माहात्म्यकीर्त्तन। नागतीर्थमाहात्म्यकीर्त्तन। रावणानुजेन प्रावणेन पातालात् निर्व्वासितेन नागराजेन ललितायमगमनपूर्ब्बक तपश्चानुष्ठानादिवर्णन। मातङ्गी तीर्थमाहात्म्यकथन।

१५ अध्याये,—राक्षसाधिपते मतङ्गस्य उपाख्यानकीर्त्तन। तत्पीडितानां देवानां कात्यायनीस्तोत्रकीर्त्तन। सिद्धविद्यया तया सह मतङ्गस्य समरसम्भवर्णन। तत्र तत्सैनिकयो निशुम्भह्यग्रीवयो विनाशादिकथन। मातङ्ग्या आविर्भावादिकथन। मातङ्ग्या शरविद्धस्य मतङ्गस्य भुजङ्गादिरूपग्रहणविवरणकथन। स्वर्गेन्द्रतीर्थमाहात्म्यकीर्त्तन। गोकुन्ततीर्थमाहात्म्यकथन। ललिताया पूजाविधानकीर्त्तन। सा तु आश्विनशुक्लप्रतिपद आरभ्य नवमीपर्य्यन्त यावत—इति कथन। अत्र पञ्चपल्लव-पञ्चामृत-पञ्चगव्यादीनां लक्षणपरिमाणादिकथन। अन्यान्यमासेऽपि तस्या पूजाकथन। दुर्गापूजाविधिकथन। देवीदर्शनार्थ यात्राविधानकथन। फलश्रुतिकीर्त्तनञ्च।

---

## No 1750 स्कन्दपुराणीयसम्भलग्राममाहात्म्यम्।

Substance, country made paper, 13½ × 7½ inches Folia 71 Lines 8 on a page Extent, 1,812 ślokas Character Nagara Date ? Place of deposit, Nimpura, Zillāh Murshidabad, Raja Ramachand Siñha Appearance, fresh Verse Incorrect

*Sambhalagrama Mahatmya*—A part of the Bhumi Khanda of the Skanda Purana It is devoted to the religious merits of the various sacred places and pools in the Province of Sambhala grama—modern Sambhalpur As usual, each sacred place has a story attached to it to illustrate its virtues and sin removing powers The work extends to 24 chapters It is a local legend, not named in the account of the Puranas given in the Nárada Purana

Beginning ॐ नमः परमात्मने। नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।

देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्॥

\+ + + + काम्यं पश्यन्ति पादपा।

वर्षन्ति तोयदा काले तस्मात् कालं न लङ्घयेत् ॥
गायत्रीमन्त्रतो + + दत्त येनाञ्जलित्रयं ।
काले सविधे किन्न स्यात् तेन दत्तं जगत्त्रय ॥
किं किं न सविता दत्ते काले सम्यगुपासित ।
आयुरारोग्यमैश्वर्य्यं वसूनि भपशूनि च ॥
पुत्रमित्रकलत्राणि क्षेत्राणि + + धानि च ।
भोगांश्च विविधांश्चापि स्वर्गं चाप्यपवर्गक ॥
दुर्लभा सर्वमन्त्रेषु गायत्री प्रणवान्विता ।
न गायत्र्याधिक किञ्चित् त्रयीषु परिचिन्त्यते ॥
न गायत्रीसमो मन्त्रो न शम्भलसमं पुर ।
न कल्पसदृशो देव सत्य सत्यं पुन पुन ॥ इत्यादि ।

End. अधीत्येमा कथा दिव्या न तृप्तिरधियाम्यह ।
तत्र चाम्भल भूयो मनो मे पातुमिच्छति ।
इदानीं ब्रूहि मे स्वामिन् शालग्रामकथामृतं ॥
स्कन्द उवाच । नन्दिग्रामस्य माहात्म्य चरैश्चैव द्विजोत्तम ।
कथितश्च महापुण्य शालग्रामे निशामय ॥

Colophon इति श्रीस्कन्दपुराणे भूखण्डे शम्भलग्राममाहात्म्य समाप्त । इति शं ।

विषय । १–२ अध्याये,—स्कन्देन सह ऋषीणा संवादेन शम्भलग्राममाहात्म्यकथनं । गायत्रीमाहात्म्यकीर्त्तन । शम्भलेश्वरलिङ्गमाहात्म्यकथन । चन्द्रेश्वरलिङ्गमाहात्म्यकथन । भुवनेश्वरलिङ्गमाहात्म्यकथन । शम्भलेश्वरस्वरूपवर्णन । निषादाधिपतेर्धूम्राक्षस्य आतिथ्यादिवर्णन । काम्पिल्यनगरवास्तव्यस्य सोमयाजिनो देवशर्म्मण उपाख्यानकीर्त्तन । तत्पुत्रस्य द्यूतकारस्य वृत्तान्तकीर्त्तन ।
४,५ अध्याये—ययातिकृतराजसूययज्ञविवरणकथनं । तेन सह नारदस्य संवादादिकथन । नारदेन अर्ककुण्डेश्वरमाहात्म्यकीर्त्तन । अत्र चन्द्रदेशस्य जात वृद्धदेवस्य शालूकाभिधानस्य वैश्यस्य विवरणकथन । हंसतीर्थमाहात्म्यकथनं । तत्र काके सार्द्धं कोषाना विवादवृत्तान्तकीर्त्तन । कृष्णतीर्थमाहात्म्यकथन । श्वेतद्वीपमाहात्म्यकथन । गङ्गमाधवतीर्थमाहात्म्यकथनं । ज्वालार्कतीर्थमाहात्म्यकीर्त्तन । तत्र सुरथाभिधानस्य नरपतेरुपाख्यानकथन । मधेश्वरमाहात्म्यकथन । दशाश्वमेधवर्णनञ्च ।
६–९ अध्याये—पिशाचमोचनतीर्थवर्णन । तत्र पिशाचेन सह कस्यचिद् ब्राह्मणस्य संवादकथनादिक । चतुर्मुखतीर्थकथन । हरिमन्दिरतीर्थमाहात्म्यकथन

विषय। विजयतीर्थमाहात्म्यकीर्त्तनं। एकाम्नीतीर्थवर्णनादिकं। अक्लीमरसीतीर्थविवरणकथनं। अत्र कौशिकीतीरनिवासस्य दम्बदन्तस्य उपाख्यानकथनं। तस्य निर्व्वेदादिवर्णनं। तीर्थसागरमाहात्म्यादिकथनं। अग्निपञ्चकतीर्थमाहात्म्यादिकीर्त्तनं यमदण्डकतीर्थमाहात्म्यादिकीर्त्तनं।

१०—१३ अध्याये,—महोदकीतीर्थमाहात्म्यादिकथनं। मणिकर्णिकाया महोदकीनामप्राप्तिकारणकथनं। तत्र सोमवंशप्रभवस्य पुरुजेठनामकस्य राजर्षेर्विवरणकथनं। शिवेन तस्य पूर्व्वजन्मवृत्तान्तकीर्त्तनञ्च। ऋणमोचनतीर्थमाहात्म्यादिकथनं। पापमोचनतीर्थमाहात्म्यादिकीर्त्तनं कलदकतीर्थमाहात्म्यादिकथनं। सोमतीर्थमाहात्म्यादिकथनं। विस्तरतः प्रयागतीर्थवर्णनं। मृत्युतीर्थमाहात्म्यादिकथनं। एवं ब्रह्मावर्त्त-नर्म्मदा-धर्म्मकूपतीर्थानां माहात्म्यकथनं। पञ्चहृदयतीर्थस्य माहात्म्यकथनप्रसङ्गेन विष्णुना सह पितृलोकानां सम्वादादिकथनं। भविष्यगङ्गाया विवरणकथनं। तत्र विष्णुना सार्द्धं तापस्य सल्लापादिवर्णनञ्च।

१४—१७ अध्याये,—सोमतीर्थमाहात्म्यकथनप्रसङ्गेन तस्या उद्भवादिवृत्तान्तकीर्त्तनं। अत्र विशालाभिधानस्य वणिज उपाख्यानकीर्त्तनं। गोदावरीतीर्थमाहात्म्यकथनं। भारतीतीर्थमाहात्म्यकीर्त्तनं। रेवाकुण्डमाहात्म्यादिकथनं। अत्र चटकमिथुनस्य विवरणकीर्त्तनञ्च। तीर्थगोपालमाहात्म्यादिकथनं। अत्र चत्रियवंशसम्भूतस्य दत्त श्रियेयस्य विप्रस्य उपाख्यानकथनं। अत्र दमरसीतीर्थमाहात्म्यकीर्त्तनं। अत्र दशार्णदेशवासस्य लवणविक्रयिणो नादिकाभिधानस्य ब्राह्मणस्य उपाख्यानकथनं। तस्य पुनर्जन्मनि चत्रियवंशे जन्मादिविवरणकीर्त्तनञ्च। भद्रकाश्रममाहात्म्यादिवर्णनं।

१८—२१ अध्याये—चण्डिकाश्रममाहात्म्यकथनप्रसङ्गेन अन्तस्तपस्यादिवर्णनं। देवतीर्थमाहात्म्यकथनं। शिप्रातीर्थमाहात्म्यकीर्त्तनं। गङ्गातीर्थमाहात्म्यकथनमुखेन कमलगन्धिनीनाम्निकाया विद्याधर्य्या उपाख्यानकथनं। शरदीपतीर्थमाहात्म्यकथनं। तत्र गोधाया उपाख्यानकथनञ्च। सेतुतीर्थमाहात्म्यादिकथनं। चक्रहृदतीर्थमाहात्म्यकीर्त्तनप्रसङ्गेन रैभ्यस्य उपाख्यानकथनं।

२२—२५ अध्याये—रुद्रगयातीर्थमाहात्म्यकथनं। अत्र द्विजमणिनामकस्य रूपसेवस्योपाख्यानकथनञ्च। गुरुतीर्थमाहात्म्यकथनादिकं। अत्र चरित्रधर्म्मभञ्जकस्य राज उपाख्यानकथनञ्च। गयातीर्थमाहात्म्यादिकथनं। यज्ञकूपतीर्थमाहात्म्यादिकीर्त्तनं। गङ्गासागरकूपतीर्थमाहात्म्यादिकथनं। विष्णुभक्तिमाहात्म्यकथनं। कलिधर्म्मकथनं। तत्र नराणां प्रकृतिवर्णनादिकं। ब्रह्मस्थले विष्णुयशोऽभिधानस्य विप्रस्य पुत्रत्वेन कल्क्यवतारविवरणकथनञ्च। कलौ विशेषेण ब्रह्मस्थलमाहात्म्यकीर्त्तनं।

---

## No 1751 स्कन्दपुराणीयगणेशमाहात्म्यखण्डः ।

Substance, country made paper, 13½ × 7 inches Folia, 45 Lines, 12—13 on a page Extent, 1,764 slokas Character, Nágara Date Sm, 1834 Place of deposit, Nasipura, Zillah Murshidabad, Raja Rámachand Siñha Appearance, fresh Verse Generally correct

*Ganes a Mahatmya* —The life of Ganesa, his birth, loss of human head, wars, sanctity and virtues, as also the ritual of worshipping him The work extends to 22 chapters and professes to be a part of the Ganesa Khanda of the Skanda Purána

Beginning श्रीगणेशाय नमः । स्कन्द उवाच । शिवशम्भो महादेव सर्व्वज्ञ सुखदायक ।
आख्यानानि सुपुण्यानि श्रुतानि त्वन्मुखाम्बुजात ॥
विचित्राणि पवित्राणि सर्व्वाघशमनानि च ।
शाक्त शाङ्कर सौराणि बहूनि वैष्णवाणि च ॥
येषां श्रवणमात्रेण पलायन्ते महापद ।
पुरुषार्थाः प्रसिध्यन्ति महादेव जगत्पते ॥
तथापि तृप्ति ना यामि पायं पायं सुधामिव ।
अतस्त्व कृपया ब्रूहि गणेशचरितं मम ॥
अघनाशन भक्तिदायकान सर्व्वकामप्रपूरकान् ।
शरण्यानस्य लोकस्य अनुमर्दसि शङ्कर ॥
शिव उवाच । सम्यक पृष्ट त्वया स्कन्द सर्व्वलोकोपकारकं ।
गणेशचरितं वक्ष्य भक्तिदाभ तवानघ ॥ इत्यादि ।

End व्यास उवाच । शिवेन कथितो विप्रा स्कन्दाय श्रुततोऽपि च ।
विनायकस्य चरितं न भवद्भ्या निवेदितं ॥

Colophon इति • स्कन्दपुराणे गणेशमाहात्म्ये शिवस्कन्दसंवादे गणेशमाहात्म्यवर्णनो नाम द्वाविंशतितमोऽध्याय । शकाब्द १८३४ । कार्त्तिकमास ।

विषय । १ प्रथमे अध्याये,—शिवस्कन्द संवादप्रसङ्गेन गणेशस्य निर्विघ्नोत्पत्तिकथन । गणेशस्य चरित्रब्रह्मादीनामनुशीलनम । [illegible] गणेशस्य प्रभावर्णन तत्र [illegible] । [illegible] । [illegible] ।
२, ३ अध्याये,—[illegible] ।

विषय । केनचित् मुनिना समुपदिष्टोऽसौ तपस्यार्थं सरस्वत्यास्तीरं प्रययौ । अथ सकल-मनोरथोऽयं स्वराज्यं पुनरागम्य सपुत्र दैवराश्चे अभिषिक्तवानिति वृत्तान्तकथनं । तत्र सरस्वत्याः नदीभावप्राप्तिकथन ।

४, ५, ६, ७ अध्याये—अभिजित्पुत्रस्य गणस्य दिग्विजयोद्यतस्य देवानीकपराजयवृत्तान्तवर्णनं । अथैकदा मृगयार्थं महारण्यमुपागतोऽसौ बुभुक्षया पीड़िते सैनिकैः सार्द्धं कपिलस्य मुनेराश्रमं प्राप । स च चिन्तामणिमणिप्रभावेण सगणस्य तस्य यथोचितमातिथ्यं कृतवान । गणकृतचिन्तामणिहरणविवरणकथन । कपिलतपस्यया सन्तोषमापन्नस्य विनायकस्य गणवधार्थमाविर्भावकथन । गणस्य दुःस्वप्नदर्शनविवरण । गणवधवृत्तान्तकथन । गणेशस्य चिन्तामणिनामप्राप्तिकथनञ्च ।

८, ९, १० अध्याये,—वासवादीनां कपिलाश्रमे भोजनविवरणकथन । तत्र सुप्रसन्नेन पुरन्दरेण कपिलाय चिन्तामणिदानवृत्तान्तकीर्त्तनञ्च । एकदा जृम्भमाणस्य ब्रह्मणो मुखात् कस्यचित् रक्तवर्णपुरुषस्य उद्भवादिकथन । तस्य सिन्दूरनामप्राप्तिकथन । 'त्वत्कृतवेष्टनेन सर्वे भस्मीभविष्यन्तीति' ब्रह्मणा तस्मै वरदानकथन । तेन कृतानुगमनस्य भयाकुलस्य ब्रह्मणो वैकुण्ठसमीपे पलायनादिकथन । विष्णोरुपदेशेन सिन्दूरस्य विनायकेन सह युद्धार्थं कैलासगमनादिवृत्तान्तकथन । तद्भयाकुलानां देवानां विनायकस्तोत्रकीर्त्तनं । पार्वतीपुत्रत्वेन अवतरिष्यामीति तान् प्रति विनायकस्य आश्वासवाक्यकथनादिक । अर्द्धनारीश्वररूपेण नन्दनकानने शिवाशिवयोः विहारकथन । गजासुरस्य वधवृत्तान्तकथन । तच्चर्मपरिधानेन शिवस्य कृत्तिवासोऽभिधानप्राप्तिकथनञ्च । तन्मस्तकस्य पूज्यत्वकथनञ्च ।

११, १२ अध्याये—एकदा गर्भिण्याः पार्वत्याः वायुरूपेण उदरमध्ये प्रविष्टेन सिन्दूरेण नखैः गर्भस्थस्य शिशोः शिरश्छित्वा नर्मदायां निक्षिप्तमपि पार्वत्यादीनां तद्वृत्तान्ताज्ञानकथन । तत्र पार्वतीकुमारदिदृक्षया समवेतानामुपेन्द्रादीनां मस्तकहीनं बालकं पश्यतां प्रार्थनया विनायकेन शिवगृहस्थित गजासुरमस्तकमेव शिरस्त्वेन स्वीकृतमिति कथनादिक । गजाननकृतसिन्दूरवधवृत्तान्तवर्णन ।

१३, १४ अध्याये,—सौभरिनामकस्य मुनेः शापात् क्रौञ्चनाम्नकस्य गन्धर्वस्य मूषिकत्वप्राप्तिकथनं । ततः तत्कृतकारुण्येन सकरुणहृदयेन सौभरिणा 'गणेशवाहनो भविष्यसीति' तस्मै वरदानवृत्तान्तकथन । इन्द्रस्याज्ञया विघ्नरूपेण कालपुरुषेण अभिनन्दनस्य राज्ञः यज्ञध्वंसवृत्तान्तकथन । तत्र विघ्नराजावतारकथाकीर्त्तनं । तेन सह विघ्नस्य समरसम्भवर्णनञ्च ।

१५, १६, १७, १८ शङ्खासुरकृतवेदादिहरणविवरणकथन । ब्राह्मणरूपधारिणा विनायकेन सर्वाणि शास्त्राणि गृहीत्वा वत्सासेति समाख्यामधिगतेन मुनिस्य

विषय। वेदादिशास्त्रदानवृत्तान्तकथनं। मयूरेशरूपेण विनायकेन गृध्रासुरमोदरस्य कम-लासुरस्य वधवृत्तान्तकथनं। मयूरेश्वरमाहात्म्यकथनञ्च।
१९, २०, २१, २२ अध्याये,—विन्ध्यदेशाधिपस्य धूम्राभिधानस्य भूपालस्य भृगुणा सह संवादेन राज्ञः पूर्व्वजन्मवृत्तान्तवर्णनं। विन्ध्यदेशवासिनस्य माधवाख्यस्य ब्राह्मणस्य पत्न्या अनपत्यतया निर्व्वेदमापन्नाया तपसा सन्तोषितात् भगवतो वरप्राप्तिवृत्तान्तकथनं। माधवपुत्रस्त्वां हनिष्यतीति आकाशवाणीं निशम्य धूम्रस्य मूर्च्छादिविवरणकथनं। तत्र नीतज्ञाना वादानुवादविवरणकथनं। माधव पुत्ररूपेण विनायकेन धूम्रवधवृत्तान्तकथनं। तस्य धूम्रकेतुनामप्राप्तिकथनं। गणेश नामनिर्व्वचनम्। त्रिपुरासुरस्य परचयनिर्म्माणादिवृत्तान्तकथनं। पिनाकपाणिकृत त्रिपुरवधविवरणकथनं। विशेषेण विनायकमाहात्म्यकथनञ्च। इति शम्।

---

## No 1752 स्कन्दपुराणीयसह्याद्रिखण्डे रेणुकामाहात्म्यविभाग।

Substance country-made paper 14 × 7 inches Folia 113 Lines 9 on a page Extent 2542 ślokas Character Nágara Date ? Place of deposit Nasipura, Zillah Murshidabad, Rája Rámachand Siṃha. Appearance fresh Verse Generally correct

*Reṇukā Máhátmya*—The history of Renuká, daughter of Renuka, king of Kanyakubja Siva was charmed by her beauty and wanted to marry her The work extends to 64 chapters, and comprises a great number of anecdotes regarding various places in Central India, and of Ráma's peregrinations during his exile It is said to be a part of the Sahyádri Khaṇḍa of the Skanda Puráṇa

Beginning ॐ नमो भगवते वासुदेवाय। नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥
ऋषय ऊचुः। यत् त्वया कथितं स्कन्द भुक्तिमुक्तिप्रदं।
विरजं रामतीर्थं तदस्माभिः श्रुतं प्रभो॥
न तृप्तिर्हि न चास्माकं विस्तराद् ब्रूहि षण्मुख।
क चैकाकी सा देवी जमदग्नेश्च का प्रिया॥
कथं स्त्रीं मातरं स रामः अविधायकः।
जमदग्निः कथम्भूता का येन तत्र यादृश॥

कार्त्तवीर्य्यं स रामेण कथयस्व कथं हत ।
स्कन्द उवाच । देवानां दानवानाञ्च युद्धमासीत् सुदारुणं ।
तदैतानजयन् दैत्या मायया बलिन सुरान ॥
तत शक्रादयो देवा निर्जितास्तैर्महासुरे ।
निराकृतास्ते त्रिदशा गोविन्दं शरणं ययु ॥ इत्यादि ।

End
श्रुत्वा माहात्म्यमतुलं पुरुषो भक्तिमत्त ।
ब्राह्मणान् भोजयेत पश्चात दद्याद्दानान्यनेकश ॥
सर्व्वान कामानवाप्नोति नात्र कार्य्या विचारणा ।
इति सर्व्वं मुनीन्द्राय वशिष्ठाय तु शङ्कर ॥
उक्तवान सुमते यद्वा तत् सर्व्वं कथितं मया ।
*अविचाररहितो भूत्वा तत सिद्धिं गमिष्यति ॥*

Colophon
इति श्रीस्कन्दपुराणे सह्याद्रिखण्डे रेणुकामाहात्म्ये शङ्करवशिष्ठसंवादे फलश्रुति-नाम चतुःषष्टितमोऽध्याय । (इति प्रथमो भाग)।

५१-५५ अध्याये,—तत्र प्रत्यहता गतायाः रेणुकायाः समादेशात् रामेण खड्ग-जालप्रक्षालनार्थं भागीरथीगमनविवरणकथनं। रामतीर्थस्य उत्पत्तिकथनं। तत्र दत्तात्रेयाश्रमे मङ्गतीर्थचक्रतीर्थादीनामुत्पत्तिकथनं। रामकृतयज्ञानुष्ठानसमृद्धि-वर्णनं। तेन च दक्षिणात्वेन कश्यपाय पृथिवीदानविवरणकथनं। रामकृत-रेणुकाभिषेकवृत्तान्तकीर्त्तनं। तत्र ब्रह्मादिकृतरेणुकास्तोत्रकथनं। ब्रह्मणः पुरतः हरिणा गायत्रीरूपायाः रेणुकायाः सर्व्ववेदमयत्वकथनं। ब्रह्मणो वेदोपदेशप्राप्ति-विवरणकथनञ्च।

५६-५८ अध्याये—आजीगर्त्तस्य "शुनःपुच्छ शुनःशेफ शुनोलाङ्गूलश्च" इति त्रयः पुत्रा आसन्। तत्र दुर्भिक्षनिपीडितेन आजीगर्त्तेन हरिश्चन्द्रस्य राज्ञः समीपे शुनःशेफं विक्रीय तज्जातपापेन अधोगच्छता शमीकाभिधानस्य ऋषेरुपदेशात् रेणुकातीर्थगमनवृत्तान्तकीर्त्तनं। देवशर्म्मनामकस्य मुनेः शापेन हस्तीकृतस्य इन्द्र-द्युम्नस्य रेणुकातीर्थगमनविवरणकथनं। रेणुकासमादिष्टेन ब्रह्मणा क्षीरसागरात् आमलकीतरुसहितस्य विष्णोरानयनवृत्तान्तकथनं। विशेषेण रेणुकामाहात्म्यकी-र्त्तनं। तत्र मणिदत्ताभिधानस्य ब्राह्मणस्य उपाख्यानं।

५९-६४ अध्याये,—रामदीर्घिकाविवरणकथनं। भास्करतीर्थमाहात्म्यकथनं। भा-स्करस्य छायायां भानुमतीनाम कन्या बभूव। तां कामयमानस्य तस्य कुष्ठरोग-प्राप्तिविवरणादिकथनं। पद्मतीर्थस्थापनवृत्तान्तकीर्त्तनं। विष्णुना हयग्रीवरूपेण काञ्जिकाभिधेयासुरनाशनवृत्तान्तकथनं। जम्बूकरूपस्य कर्णधारस्य रूपतेजःप्रा-प्त्यानकीर्त्तनं। शङ्करतीर्थवर्णनं। कोटितीर्थमाहात्म्यकथनप्रसङ्गेन मुचुकुन्दस्य रूपतरूपाख्यानकीर्त्तनं। फलश्रुतिकीर्त्तनञ्च। इति रेणुकामाहात्म्यविषयः॥

---

## No 1753 स्कन्दपुराणीयावन्तीखण्ड.।

Substance, country made paper, 13¼ × 7¼ inches. Folia, 143. Lines, 12 on a page. Extent, 5,315 slokas. Character, Nagara. Date, Sm 1835. Place of deposit, Nasipura, Zillah Murshidabád, Raja Ramachánd Sinha. Appearance, fresh. Verse. Generally correct.

*Avanti Khanda*.—The fifth of the seven parts into which the Skanda Purána is divided. It belongs to the class of works which are known under the generic name of Mahátmya. Its character may be best described by comparing it with a modern tourist's guide, though the authorship of the work is attributed to a divine personage. It

opens with a request from Umá, who desires her lord to describe, for her information, all those sacred pools and rivers on the earth where funeral cakes should be offered to the manes, and in reply to this comprehensive question S'iva gives her an account of all the sacred places, temples, pools and lingams in the city of Avanti, modern Ujjain, and its neighbourhood, and recites a number of stories to account for the sanctity of those places. The names of the places, and abstracts of the stories relating to them, are given below in Sanskrit.

Beginning. श्रीगणेशाय नमः । उमा उवाच । पृथिव्यां यानि तीर्थानि पुण्यास्य सरितस्तथा ।
कथ्यन्तां तानि यत्नेन श्राद्धं येषु प्रदीयते ॥
ईश्वर उवाच । अस्ति लोकेषु विख्याता गङ्गा त्रिपथगा नदी ।
सेविता देवगन्धर्वैर्मुनिभिश्च निषेविता ॥
तपनस्य सुता देवि यमुना लोकपावनी ।
पितृणां वल्लभा देवि महापातकनाशनी ॥
चन्द्रभागा वितस्ता च नर्मदामरकण्टकं ।
कुरुक्षेत्रं गया देवि प्रभासं नैमिषं तथा ॥
केदारं पुष्करञ्चैव तथा कायावरोहणं ।
तथा पुण्यतमं देवि महाकालवनं शुभं ॥
यत्रास्ते श्रीमहाकालः पापेभगडताशनः ।
क्षेत्रे योजनपर्यन्तं ब्रह्महत्याविनाशनं ॥ इत्यादि ।

End. इत्येते चतुरशीतिमख्याता ईश्वरास्तव ।
कथिता ये मया ++ महाकालवने ++ ।
एतेषां देवि यो यात्रां प्रतिलोमानुलोमतः ।
करिष्यति नरो भक्त्या स यास्यति परं पदं ॥
यद्येषां लिङ्गमेकन्तु पश्येद्भक्त्याथ वा पुनः ।
सकुलं तारयेद्देव पैतृकं मातृकं गणं ॥
एष स कथिता देवि प्रभावपापनाशन ।
चतुरशीतिलिङ्गानां किं भूयः श्रोतुमिच्छसि ॥

Colophon. इति स्कन्दपुराणे अवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्यं । शिवमस्तु ।
संवत् १८९५ ।

विषय. । ईश्वरोमासंवादेन अष्टादशतीर्थपुण्यनदीनां निरूपणप्रसङ्गात् चतुरशीति-
लिङ्गकीर्तनमाहात्म्यकीर्तनं । तत्र अवन्तीदेशे महाकालवनवर्णनं । तदनन्तर-

विषय। माहात्म्यादिवर्णनं। अत्र असुरविप्रहतानां देवानां मुखग्लानिं निरीक्ष्य समाप्त-
हृदयेन अगस्त्येन स्वतेजसा दानवकुलं भस्मसात्कृत्वा 'किमिदमनुष्ठितं हिंसारूप-
मयत्पापमिति' खेदमधिगच्छता अगस्त्येश्वराभिधानलिङ्गप्रतिष्ठावृत्तान्तकथनं।
गुह्येश्वरलिङ्गमाहात्म्यकीर्त्तनं। अत्र मङ्कणाभिधानस्य महर्षेर्वृत्तान्तकीर्त्तनं। ढुण्ढेश्वर-
लिङ्गमाहात्म्य। अत्र गणनायकस्य ढुण्ढस्य वृत्तान्तकथनं। डमरुकेश्वरलिङ्ग-
माहात्म्यं। रुरुपुत्रेण सुरपुराद्विर्वासितानां वासवादीनां सुराणामिति सम्भूतया
देव्या समरमध्ये रुरुपुत्रादिनिपातनानन्तरं महाकालवनगमनादिवृत्तान्त-
कथनं। अनादिकल्पेश्वरलिङ्गमाहात्म्य। तत्र अहमेव ज्यायानिति विवदमानयोः
पद्मनाभपद्मजन्मनोः ज्योतिर्लिङ्गप्रयाणादिकथनं। स्वर्णद्वारेश्वरमाहात्म्यकीर्त्तनं।
तत्र वह्निमुखनिक्षिप्तस्य शैवरेतसः सुवर्णस्य उद्भवादिकथनं। तल्लाभाय अन्योन्य
प्रहरतां सुरासुरादीनां निधनादिकथनञ्च। त्रिविष्टपेश्वरलिङ्गमाहात्म्य। अत्र देव-
र्षिणा सह देवेन्द्रस्य महाकालवनगमनादिवृत्तान्तकथनं। कपालेश्वरमाहात्म्यकथनं।
तत्र कापालिकवेशेन महाकालवने प्रविशता कपालिना तमजानता विप्राणां
लोष्ट्रादिप्रक्षेपविवरणकीर्त्तनं। स्वर्गद्वारेश्वरलिङ्गमाहात्म्यकथनं। तत्र रणमुखात्
विष्णुना सुदर्शनेन ताडितस्य वीरभद्रस्य निधनवृत्तान्तमुपश्रुत्य शूलमादाय
शूलिने दक्षयज्ञमध्ये उपेन्द्रादीनामर्द्दनकथनं। तदनन्तरं स्वर्गद्वारनिरोध-
वृत्तान्तकीर्त्तनञ्च। कर्कोटेश्वरलिङ्गमाहात्म्यकथनं। तत्र मातुः शापेन भीतानां
शेषादीनां तपस्यादिवर्णनं। कर्कोटकस्य महाकालवनप्रवेशादिविवरणञ्च। सि-
द्धेश्वरलिङ्गमाहात्म्य। महाकालवनं प्रविश्य सिद्धानां तपश्चरणादिवृत्तान्तवर्णनं।
लोकपालेश्वरलिङ्गमाहात्म्यकीर्त्तनं। दानववृन्दाकुलितानां लोकपालानां नारायण-
णोपदेशेन महाकालवनगमनादिवृत्तान्तकीर्त्तनं। कामेश्वरलिङ्गमाहात्म्यकीर्त्तनं।
अत्र ब्रह्मशरीरात् कामस्य उत्पत्तिकथनं। कामं प्रति ब्रह्मणः शापदानविवरणादि-
कीर्त्तनञ्च। कुटुम्बेश्वरलिङ्गमाहात्म्य। तत्र नीलकण्ठरूपधारिणा भगवता नीलकण्ठेन
समुद्रोत्थानं कालकूट भक्षीय शिप्राप्रवाहेण महाकालवने तत्प्रक्षिप्तमित्यादि-
वृत्तान्तकथनं। इन्द्रद्युम्नेश्वरलिङ्गमाहात्म्यकथनं। तत्र इन्द्रद्युम्नस्य नृपतेः हिमा-
लयपार्श्वे तपस्यादिकथनञ्च। ईशानेश्वरलिङ्गमाहात्म्य। तत्र तुहुण्डाभिधानेन
दानवेन ताडितानां देवानां नारदोपदेशेन महाकालवनप्रवेशादिकथनञ्च।
अप्सरसेश्वरलिङ्गमाहात्म्यकथनं। तत्रैकदा सुरसदसि नृत्यन्त्या रम्भया तौर्य्यत्रिकेषु
प्रमादमाकलय्य जातकोपस्य वासवस्य शापेन मन्युरासीत्, तदनन्तरञ्च अभि-
शप्तायास्तस्या नारदोपदेशेन महाकालवनगमनादिविवरणकीर्त्तनञ्च। कलकले-
श्वरलिङ्गमाहात्म्यकीर्त्तनं। तत्र गिरिजया सार्द्धं गिरिशस्य कलहवृत्तान्तकथनञ्च।

विषय । चण्डेश्वरलिङ्गमाहात्म्यकथनं। नारदेन सह देवानां महाकालमुद्दिश्य गच्छतां पथि नामचण्डेत्यभिधानेन गणनायकेन सह संवादकथनम् । प्रतीहारेश्वरलिङ्गमाहात्म्यकथनं। तत्र द्वारपाल नन्दिनं वञ्चयित्वा रतमात्रयोः शिवाशिवयोः गाग्नि सुप्रियतं दृष्टवति नन्दिनं प्रति विश्वाहस्य शापदानप्रसङ्ग कथनञ्च । कुक्कुटेश्वरलिङ्गमाहात्म्यकथनं । रात्रौ कुक्कुटरूपधारिणः कौशिकनामकस्य राज्ञ उपाख्यानकीर्त्तनञ्च । कर्कटेश्वरमाहात्म्यकथनं । तत्र धार्मिकनामकस्य नृपतेः पुरतः वशिष्ठेन पूर्व्वजन्मनि राज्ञः शूद्रजातित्वकथनादिकं । मेघनादेश्वरलिङ्गमाहात्म्यकथनं । महाध्वनामकेन असुरेण उपद्रुतानां दुःखितानां मानवदर्शनार्थे श्वेतद्वीपगमनादिकथनं । महालयेश्वरलिङ्गमाहात्म्यकीर्त्तनं । मुक्तीश्वरलिङ्गमाहात्म्यकीर्त्तनं । तत्र मुक्तिनामकेन ब्राह्मणेन सार्द्धं तं हन्तुकामस्य व्याधस्य संवादकथनञ्च । सोमेश्वरलिङ्गमाहात्म्यकीर्त्तनं । तत्र दक्षेण दुहितृषु विहाय रोहिण्यामेव अनुरक्तं सोमं प्रति समुचितकोपेन दक्षेण शापदानविवरणकथनं । नरकेश्वरमाहात्म्यकीर्त्तनं । तत्र पूर्व्वकल्पीयकलियुगे जीवानां नरकयातनावर्णनप्रसङ्गेन निमिनामकेन नृपतिना सह यमकिङ्करस्य संवादकथनं । जटेश्वरलिङ्गमाहात्म्यकीर्त्तनं । तत्र रथन्तरकल्पीयस्य वीरधन्वाभिधानस्य नरपतेरुपाख्यानकीर्त्तनञ्च । (परशु)रामेश्वरलिङ्गमाहात्म्यकथनं । तत्र अनुष्ठितयज्ञस्य परशुरामेण सह नारदस्य संवादकथनादिकञ्च । च्यवनेश्वरमाहात्म्यकथनं । तत्र वितस्तायाः तीरे तपश्चरतः प्राप्तवल्मीकस्य च्यवनस्य निरूपयन्तीनां शर्य्यातिकामिनीनां वृत्तान्तकथनञ्च । पण्डेश्वरलिङ्गमाहात्म्यकथनं । तत्र भद्रायाभिधेयेन राज्ञा मार्कण्डेयस्य संवादकथनञ्च । पत्तनेश्वरलिङ्गमाहात्म्यकीर्त्तनं । तत्र दक्षेण सह दधीचेः संवादकथनञ्च । आनन्देश्वरलिङ्गमाहात्म्यकीर्त्तनं । तत्र रथन्तरकल्पे अनमित्रतनयस्य आनन्दाभिधानस्य नरपतेरुपाख्यानकथनञ्च । कन्थडेश्वरलिङ्गमाहात्म्यकथनं । तत्र प्रतरोज अतुकामस्य दरिद्रद्विजशिशोः तपस्यादिवर्णनञ्च । इन्द्रेश्वरलिङ्गमाहात्म्यकथनं । तत्र शतक्रतुना स्वतनयं निहतं श्रुत्वा कोपज्वालतस्य त्वष्टुः जटामाच्छिद्य अग्नौ क्षिपतः प्रभावेन वृत्रस्य उद्भवादिकथनञ्च । मार्कण्डेश्वरलिङ्गमाहात्म्यकथनं । तत्र पुत्रलाभार्थं मृकण्डोस्तपस्यादिवर्णनञ्च । शिवेश्वरलिङ्गमाहात्म्यकीर्त्तनं । तत्र प्राक्कल्पीयरिपुञ्जयाभिधानस्य नृपतेरुपाख्यानकथनञ्च । कुसुमेश्वरलिङ्गमाहात्म्यकीर्त्तनं । तत्र गणेशस्य कुसुमक्रीडादिवर्णनञ्च । अक्रूरेश्वरलिङ्गमाहात्म्यकथनं तत्रैकदा भृङ्गिरिटेः सकाशात् कदर्थ्यमानशिवस्य अविनयाभावाय पार्व्वत्याः पुरतश्च स्वकायात मांसभागस्य मासभाषितादिपरित्यागवृत्तान्तकीर्त्तनञ्च । कुण्डेश्वरलिङ्गमाहात्म्यकथनं । स्वतनयं वीरकं महाकालवने

विषय । तपस्यन्त निशम्य दिदृक्षया कृतप्रयाणयो पार्व्वतीपरमेश्वरयो गणाध्यक्षेण कुण्डेन सह संवादकथनञ्च । लुम्पेश्वरलिङ्गमाहात्म्यकीर्त्तन । तत्र म्लेच्छराजस्य लुम्पस्य युयुत्सया सामगनामकस्य मुनेराश्रमप्रविष्टस्य बलात्कारेण होमधेनुग्रहणादिवृत्तान्तकथनञ्च । गङ्गेश्वरमाहात्म्यकथन तत्र गङ्गां प्रति समुद्रस्य शापदानवृत्तान्तकीर्त्तनञ्च । अङ्गारकेश्वरमाहात्म्यकथन । तत्र शिवशरीरादङ्गारकस्य उत्पत्ति, तस्य मङ्गलादिनामप्राप्तिवृत्तान्तकथनञ्च । उत्तरेश्वरलिङ्गमाहात्म्यकीर्त्तन । तत्र इन्द्राज्ञया कघनामकालघर्षणादिवृत्तान्तकथनञ्च । नूपुरेश्वरलिङ्गमाहात्म्यकीर्त्तन । तत्र नूपुरस्य तपस्यादिवर्णनञ्च । अभयेश्वरमाहात्म्यकीर्त्तन । तत्र भिक्षया चिन्ताकुलस्य कफलकस्य अश्रुविन्दुतो हेरम्बकालकाभिधानयो दानवयो उत्पत्त्यादिकथनञ्च । पृथुकेश्वरलिङ्गमाहात्म्यकीर्त्तन । तत्र वेणशरीरात् पृथोरुत्पत्तौ तत्कृतधरादोहनविवरणकीर्त्तनञ्च । स्थावरेश्वरमाहात्म्यकथन । तत्र छायाया गर्भे शनैश्चरस्य उत्पत्तिकथन । तद्भयात् देवाना सहाद्रवम्भोधिगमनादिविवरणञ्च । शूलेश्वरलिङ्गमाहात्म्यकीर्त्तन । तत्र जम्भासुरसमीपात् वासवादीना पराजय गौरीप्रार्थनया गिरिशस्य समीपे अन्धकस्य दूतप्रेरणादिवृत्तान्तकथनञ्च । ॐकारेश्वरलिङ्गमाहात्म्यकथन । तत्र ॐकाराभिधानस्य कपिलाशनेरुपाख्यानकीर्त्तनञ्च । विश्वेश्वरलिङ्गमाहात्म्यकथन । कण्ठेश्वरलिङ्गमाहात्म्यकथन । तत्र सूर्य्यवंशीयस्य सत्यविक्रमनामकस्य नृपते महाकालवन प्रस्थितस्य तत्र शिवचर कश्चन तापस उद्धारेणैव अलौकिकवस्तुदर्शनमध्ये पश्यत उपाख्यानकीर्त्तनञ्च । सिद्धेश्वरलिङ्गमाहात्म्यकथन । तत्र पतिलेन पशुपतिमधिगन्तु तपस्यन्ती पार्व्वतीमुपेत्य प्रजापतौ शिवनिन्दनोद्यते तस्या कोपेन सिंहस्य उत्पत्त्यादिकथनञ्च । रेवन्तेश्वरलिङ्गमाहात्म्यकीर्त्तन । तत्र वडवारूपाया सञ्ज्ञाया गर्भे अश्वमुखकुमारयो रेवन्तस्य च जन्मवृत्तान्तकथनञ्च । घण्टेश्वरमाहात्म्यकीर्त्तन । तत्र घण्टाभिधस्य कस्यचित गणस्य विधातु द्वादशे संवत्सर यावदवस्थानादिवृत्तान्तकथनञ्च । प्रयागेश्वरमाहात्म्यकथन । तत्र प्रियव्रतस्य पुरतो नारदेन 'मया खलु श्वेतद्वीपे कापि कामिनी सरोवरादौ दृष्टेति' विवरणकथनञ्च । सिद्धेश्वरलिङ्गमाहात्म्यकथन । तत्र अश्वशिरोनामकस्य नृपते यौगीषव्यकपिलाभ्या सह संवादकीर्त्तनञ्च । मातङ्गेश्वरलिङ्गमाहात्म्यकथन । तत्र गर्द्दभ्या मातङ्गाभिधानस्य कस्यचित् द्विजकुमारस्य पूर्व्वजन्मवृत्तान्तकीर्त्तनञ्च । सौभाग्येश्वरलिङ्गमाहात्म्यवर्णन । तत्र प्राग्ज्योतिषपुराधिपते कामिन्या अनङ्गमञ्जर्य्या दुर्भगाया अपि पतिसौभाग्यप्राप्तिविवरणकीर्त्तनञ्च । रूपेश्वरलिङ्गमाहात्म्यवर्णन । तत्र एकदा पद्मकल्प पद्माभिधानस्य नृपते मृगयार्थ गहनमध्य प्रविष्टस्य कण्वदुहित्रा सह परिणयादिवृत्तान्तकीर्त्तनञ्च । धनु-

विषय । गरुडेश्वरलिङ्गमाहात्म्यवर्णन । तत्र वनमध्ये दुर्जयाभिधेयस्य दानवस्य गरुडविवर
दृष्ट्वा शङ्काकुलेन विदूरथनामकेन राज्ञा सार्द्धं कस्यचित ब्राह्मणस्य संवादकथनञ्च ।
पशुपालेश्वरलिङ्गमाहात्म्यकथन । तत्र पशुपालनामकस्य भूपालस्य दस्युभि
राक्रमणवृत्तान्तकीर्त्तनञ्च । ब्रह्मेश्वरलिङ्गमाहात्म्यकथन । तत्र पुलोमोऽभिधानेन
दैत्येन क्षीरसागरं गत्वा पद्मनाभनाभिपद्मस्थितोऽपि पद्मोद्भव समाक्रान्त तपस्यार्थे
महाकालवन प्रत्यागतिविवरणकथनञ्च । जल्पेश्वरलिङ्गमाहात्म्यकथन । तत्र
जल्पाभिधानराजकुमारेण सुबाहु मधुमद जय विजयविक्रान्तानां वृत्तान्तकीर्त्त
नञ्च । केदारेश्वरलिङ्गमाहात्म्यकथन । तत्र शीतज्वरार्त्तानां निर्ज्जराणां ब्रह्माण
पुरस्कृत्य पुरारिसमीपगमनवृत्तान्तकीर्त्तनञ्च । पिशाचेश्वरमाहात्म्यकीर्त्तन । तत्र
सोमशर्म्मनामकस्य कस्यचित शूद्रस्य नास्तिकतया जन्मान्तरे पिशाचत्वमापन्नस्य
शकटाक्षेन सह संवादकथनादिकञ्च । सङ्गमेश्वरमाहात्म्यकथन । तत्र दक्षि
णविषये सुबाहुनामकेन राज्ञा महिष्या पुरत निजपूर्व्वजन्मवृत्तान्तकीर्त्तनञ्च ।
दुर्द्धर्षेश्वरलिङ्गमाहात्म्यकथन । तत्र नेपालदेशवासस्य दुर्द्धर्षसञ्ज्ञकस्य राज

विषय । वृत्तान्तकीर्तनञ्च । सप्तेश्वरलिङ्गमाहात्म्यकथनं । तत्र इक्ष्वाकुवंशीय कल्माषपाद् प्रति वसिष्ठेन 'राक्षसो भवेति' शापदानविवरणकथनञ्च । पिङ्गलेश्वरलिङ्गमाहात्म्यकथनं । तत्र पिङ्गलाया उपाख्यानकथनञ्च । विल्वेश्वरमाहात्म्यकथनं । तत्र कपिलेन सह विल्वरक्षस्य संवादकथनं । कायावरोहणेश्वरलिङ्गमाहात्म्यकथनं । तत्र दक्ष प्रति चन्द्रस्य 'कायहीनो भविष्यसि' इति शापदानवृत्तान्तकथनञ्च । उत्तरेश्वरलिङ्गमाहात्म्यकथनं । तत्र पुरा किल मरीचिरित्यभिधान इक्ष्वाकुकुलतिलक कश्चित् राजा अयोध्यायां प्रतिवसति स्म । स एकदा मृगाननुसरन् अत्युत्तमसहाय मध्यकानन प्रविवेश । तत्र च कुसुमानि विचिन्वतीं कामपि कम नीयदर्शनां कामिनीं पश्यत तस्य स्मरमार्गणानां अवन्ध्यप्रभावतया तस्या हृदय सरसमासीत । सा च नृपतिप्रार्थनया आत्मान बहुमन्यमाना 'त्वया नाहक दर्शयितव्यमिति' प्रभाषा तत्र सह सुचिर रमयाञ्चकार, चकार च अन्तर्हान कदाचित राजप्रेरणया सलिलसन्दर्शनेनेत्यादिवृत्तान्तकीर्तनञ्च ॥
अत्र अध्यायसङ्ख्या नास्तीति ज्ञेयम । इति अवन्तीखण्डस्य विवरणम ॥

---

## No 1754 ज्योतिषकल्पतरु ।

Substance country made paper, 12½ × 3 inches Folia 45 Lines 10 on a page Extent 1,350 s'lokas Character Nagara Date Sa 1896 Place of deposit Calcutta Government of India Appearance Fresh Prose and verse Incorrect

*Jyotisha kalpataru* The influences of particular conjunctions of planets stars months and days of the week on the day of the birth, on human destiny By Kavi Chudamani

Beginning वृन्दाविपिनविलासी दीनदयालु समस्तजनवश्य ।
शिवविधिवन्दितचरण श्रीगोपीरमण पातु ॥
प्रणम्य सच्चिदानन्द श्रीमदानन्दनन्दन ।
प्रवक्ष्ये लौकिकस्कन्ध यत्र ने कशुभाशुभ अथ लौकिकस्कन्धो निरुप्यते ।

End इति विविधोत्पातगणनिर्णयस्कन्धे लिखिता अतस्तिानथ हि

Colophon इति श्रीकविचूडामणिविरचिते ज्योतिषकल्पतरौ लौकिकस्कन्धे उत्पातकथन नामैकादशाध्याय ॥ ११ ॥

विषय । अत्र एकादशाध्याया सन्ति । तत्र १–मे, प्रभवादिषष्टिसंवत्सरफलकथन । २–ये, वर्षपञ्चाङ्गकथन । ३–ये, सूर्य्यादिषु सप्तसु वारेषु रविसंक्रमणफलकथनं । ४–थें, भौमबुधगुरुचारकथन । ५–मे, शनिराहुचारकथनं । ६–ठे, नक्षत्रविभागकथन । ७–मे, प्रकीर्णयागकथन । ८–मे मासफलकथन । ९–में संवत्सरगर्भाधानादिकथन । १०–मे, कूर्म्मचक्रादिकथन । ११ मे, उत्पात प्रकरण ॥

---

## No 1755 तन्त्रालोकटीका ।

Substance country made paper $1^{9}\frac{1}{2} \times 4\frac{3}{4}$ inches Fol 1, 35 Lines 12 on a page Extent 1 400 slokas Character, Nagara Date ? Place of deposit Calcutta Government of India Appearance Fresh Prose and verse Incorrect

*Tantráloka tíka* A commentary on the Tantráloka, which is a work by Abhinava Gupta, on transcendental knowledge and emancipation By Jayaratha The codex is incomplete, containing only the 1st Áhnika

Beginning इह यद्यपि सर्व्ववादिनां मोक्ष एवोपादेय तत्त्वविषयभूतः [illegible] तत्र च मिथ्याज्ञान निमित्त तत्प्रतिकूलत्व तत्त्वज्ञानमिति तत्त्वसाक्षात्कारोऽस्य [illegible] । तथापि [illegible] [illegible] न ज्ञानमिति [illegible] [illegible] [illegible] [illegible] इत्यादि [illegible] भवति इति [illegible] [illegible] [illegible] [illegible] प्राधान्यमपि [illegible] [illegible] ॥

इह [illegible] ।
[illegible] ।
न [illegible] (?) [illegible] ——
[illegible] इति ।
[illegible] । [illegible] (?) [illegible] । [illegible]

स्वातन्त्र्याद्धानिर्विधस्य स्वातन्त्र्यास्याय्वेधिता। द्विधाएवं मन्त्रमिद् स्वस्वरूपाय।
घानित इति। तच कीदृदित्याह॥ समारेति।

End. इत्याह्निकादाह्निकान्तरस्य सम्यन्यायेन परस्परमनुढत्यता दर्शयितुमेकेनैव श्लोकेन तत्पर्यन्तप्रारम्भयोरुपसंहारोपक्रमौ करोतीत्यस्य ग्रन्थकारस्य शैलीति-श्लोकस्य प्रथमार्द्धेनाह्निकार्थमुपसंहरति,—
तन्त्रालोकेऽभिनवरचिते सूत्रविज्ञानसत्ता-
भेदोद्धारप्रकटनपटावाह्निकेऽस्मिन् समाप्ति।
पटाविति पाचिकात पुंसद्भावात इति शिव।
श्रीशूद्रादृरथाद्याप्य छतिनो जम्मानवद्यक्रम
श्रीमच्चक्रधरात् परं परिचयं विद्यासु सर्व्वास्वपि।
श्रीकल्याणतनोः शिवादधिगमं सर्व्वागमानामपि
व्याख्यातं प्रथमाह्निकं जयरथेनाचावबोधे बुधे॥

Colophon. इति श्रीमदभिनवगुप्तविरचिते तन्त्रालोके विज्ञानभेदप्रकाशनं नाम प्रथम-माह्निकं॥

विषय। अभिनवगुप्तविरचिततन्त्रालोकस्य व्याख्यानं। तन्त्रालोके तु समारम्भेत्वज्ञान-निरूपणं। मोक्षहेतुज्ञाननिरूपणञ्च। "इति श्रीमदभिनवगुप्तविरचिते तन्त्रालोके विज्ञानभेदप्रकाशनं नाम प्रथमाह्निकं" इति यत समाप्तिसूचकं वाक्यं तत तन्त्रालोकस्य न तु तन्त्रालोकटीकाया॥

---

## No 1756 यतिधर्म्मसमुच्चय।

Substance, country made paper, 13 × 6 inches Folia, 39 Lines, 14 on a page Extent, 2 310 s'lokas Character, Nagara Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse Correct

*Yati-dharma-samuchchaya* A compendium of the duties of Yatis and Paramahaṅsas, compiled from the leading Smritis By Vis ves-vara Sarasvati

Beginning प्रणम्य विष्णुमात्मानं सच्चिदानन्दमुत्तमं।
गुरुं सर्व्वज्ञविश्वेशं मायया धृतविग्रहं॥१॥
विश्वेश्वरसरस्वत्या क्रियते वेदमानतः।
यतः परमहंसस्य धर्म्माणामथ सङ्ग्रहः॥२॥

End. न रक्तमुल्वणं वासो न नीलञ्च प्रशस्यते ।
मलाक्तञ्च दशाहीनं वर्जयेदम्बरं यतिः ॥

Colophon. इति श्रीपरमहंसपरिव्राजकविश्वेश्वरसरस्वतीसङ्कथिते यतिधर्मसमुच्चये निवृत्तिधर्मानुष्ठानाचाराः सम्पूर्णाः (समाप्ताः) । शुभं भवतु ॥

विषयः । श्रुतिस्मृतिपुराणप्रमाणानि संगृह्य यतेः परमहंसस्य धर्मसमुच्चयनिरूपणं ।

---

## No. 1757. तत्त्वयाथार्थ्यदीपनं ।

Substance, country-made paper, 10¾ × 5 inches. Folia, 14. Lines, 12 on a page. Extent, 434 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Correct.

*Tattva-yáthárthya-dípana.* A commentary on the Tattvasamása. It comprises a summary of the leading doctrines of the S'áñkhya system of Philosophy. By Bhává Ganes'a Dikshita, son of Bhává Vis'vanátha, and pupil of Vijñána Bhikshu. Hall's *Contributions*, p. 4.

Beginning. पुरुषः स जयत्याद्यः प्रकृतिः सा जयत्यजा ।
याभ्यां संसृत्य सृज्यन्तेऽनन्तब्रह्माण्डकोटयः ॥ १ ॥
कपिलासुरिपञ्चशिखान् गुरून् विज्ञानाचार्य्यवर्य्यांश्च ।
प्रणमामि बुद्धिवृद्धौ सिद्धौ वा सर्व्वकार्य्याणां ॥ २ ॥
समासस्त्राणालम्ब्य व्याख्यां पञ्चशिखस्य च ।
भावागणेशः कुरुते तत्त्वयाथार्थ्यदीपनं ॥ ३ ॥

End. पुरुषार्थबुभूत्सूनां बोधायैव मयेरितं ।
तेभ्यः समर्पितञ्चैतत् तेनापि प्रीयतां हरिः ॥

Colophon. इति श्रीभावागणेशकृतं तत्त्वयाथार्थ्यदीपनं समाप्तं ॥

विषयः । अत्र प्रथमं साङ्ख्यमतसिद्धमूलप्रकृतिनिरूपणं । ततो बुद्धितत्त्वनिरूपणं । ततः अहङ्कारनिरूपणं । ततः पञ्चतन्मात्रानिरूपणं । ततः एकादशेन्द्रिय-पञ्चमहाभूतात्मकषोडशविकारनिरूपणं । ततः पुरुषनिरूपणं । ततस्त्रीगुणनिरूपणं । ततः सृष्टिनिरूपणं । ततः प्राकृतिक-वैकारिक-दाक्षिणरूपबन्धत्रयनिरूपणं । ततो मोक्षत्रयनिरूपणं । ततः प्रत्यक्षानुमानशब्दात्मकप्रमाणत्रयनिरूपणं । ततः आध्यात्मिक-आधिभौतिक-आधिदैविकदुःखत्रयनिरूपणं ॥

---

6, Do. of wearing garlands of Rudraksha seeds 7, Rules for repeating the Pranava 8, Religious duties of the four castes 9, Characteristics of the Yogas 10, A story of Sanka 11, Praise of saints. 12, A story illustrating the merits of offerings to Siva

Beginning. श्रीमत्कैलासमागम्य वशिष्ठो वेदवित्मुनि ।
तपश्चचार सत्कर्म्मनिरतो नियतेन्द्रिय ॥ १ ॥
दिव्य वर्षसहस्रन्तु वायुभक्षोऽग्निमध्यग ।
श्रीमत्पञ्चाक्षर साक्षाच्छतरुद्रियमध्यगं ॥ २ ॥
सर्व्वपापहर पुण्य प्रणवेन षडक्षर ।
जजाप शङ्करं द्रष्टु वाञ्छया मुनिसत्तम ॥ ३ ॥
तत प्रसन्नो भगवानम्बया सह शङ्कर ।
सिद्धज्योति स्वरूपेण पुरतोऽस्य प्रकाशित ॥ ४ ॥

End. यत्प्रसादेन विज्ञान यथावज्जायते त्वणा ।
त वन्दे षण्मुख देव ज्ञानशक्तिधरं पर ॥ ५५ ॥
यस्य प्रसादलेशस्य लवलेशलवेन तु ।
सर्व्वसिद्धिरयत्नेन त नमामि विनायक ॥ ५६ ॥

Colophon इति श्रीउपपुराणे वाशिष्ठलैङ्गे द्वादशोऽध्याय ॥ १२ ॥ सङ्ख्या १०० ।

विषय । श्रव १-मे, वशिष्ठशिवसंवाद । २-ये मायाया जगत्कारणत्वकथन । ३-ये, शिवस्यैव परमतत्त्वरूपताकथन । ४-र्थे, पञ्चदशसु तिथिषु शिवपूजाया फलकथनं । ५-मे, भस्मधारणफल । ६-ठे, रुद्राक्षधारणफल । ७-मे, प्रणवजपनियमादिकथनं । ८-मे, ब्राह्मण क्षत्रिय वैश्य शूद्रादीनां धर्म्मकथन । ९-मे, युगधर्म्मकथन । १०-मे, भिक्षापर्य्यटनव्याजेन शङ्कर्षकमुनिधर्म्मोपनदृष्टान्त । ११-शे, कोभिर्मुनिभिर्म्मदनप्रबोधनादिकथनं । १२-शे, सभार्य्यहपलस्य शिवप्रसादेन पुनरैश्वर्य्यप्राप्तिष्टान्तं ॥

---

## No 1760 आगमतत्त्वमङ्कुर, द्वितीयपरिच्छेदमात्र ।

Substance, country made paper, 12¼ × 4¼ inches Folia, 16 Lines, 12 on a page Extent 900 slokas Character, Nágara Date, ? Place of deposit, Calcutta, Government of India. Appearance, old Prose and verse Correct

*A'gamatattva-sangraha.* A compilation of the three leading doctrines of the Tantra system, including rites, adoration and knowledge. By Kes'ava Vis'varupa,—an inhabitant of the bank of the Tungabhadrá River.

Beginning. प्रणम्य सर्व्वात्मवशी महेश्वरी गुरुष सर्व्वान् विदुष कृताञ्जलि ।
द्वितीयभागं प्रकरोमि मेयप्रकाशकं ह्यागमतत्त्वसङ्ग्रहे ॥ १ ॥
प्रथमपरिच्छेदे आगमानां प्रामाण्यं निर्व्वाहितं । सम्प्रत्यागमप्रमेयतत्त्वं सङ्ग्रहेण विविच्यते ॥

End. एतेन त्रिपुरां वा श्रीयतां सर्व्वेश्वरी परा संवित् ।
श्रुतिरागमश्च यस्या निश्वसितश्चापि चोच्छ्वसितं ॥ १० ॥

Colophon. इति श्रीतुङ्गभद्रोपकूलवसतिविश्वरूपोपाध्यकेशवकृतावागमतत्त्वसङ्ग्रहे द्वितीय परिच्छेद । समाप्तो ग्रन्थ ॥

विषय । अत्र तन्त्रेषु काण्डत्रयेण निरूपितकर्म्मोपासनाज्ञानानां प्रत्येकस्वरूपनिरूपणं ।

---

## No 1761. अद्वैतब्रह्मविद्यापद्धतिः ।

Substance, country-made paper, 13 × 5 inches Folia, 23. Lines, 15 on a page. Extent 730 s'lokas Character, Nágara Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse Incorrect

*Advaita-brahmavidyá-paddhati* An attempt to interpret the adualistic theory in connexion with the supreme divinity of Mahádeva, and to support the S'aiva system of faith By Gopalás rama-rúpa Nandis'vara A'chárya.

Beginning. सकलसुरगुरुर्य्यः शङ्करादौ महेशो गणपतिजनको य षण्मुखस्याङ्गजो यः ।
निखिलजननकर्त्री यस्य शक्तिर्व्विभा त विनतकरणसङ्गचिन्तय विश्ववन्द्यं ॥ १ ॥
निखिलसुरगणाग्र्यो यक्तु नन्दीश्वराख्यो विविधसुतपसा यः श्रीशिलादेन लब्ध ।
सुमुनिगणनमस्यो दुर्जयो देवसङ्घै सजनहितकर त वन्दित वन्दे गणाग्र्यैः ॥ २ ॥

End. षड्ध्यायीमिमां यस्तु शिवप्रीतिकरी शुभां ।
पठेद्वि शृणुयाद्वापि यथेष्ट फलमाप्नुयात् ॥ ७७ ॥
अनेन कृपया प्रिय प्रथिय मनसारयत् ।
यः शम्भो परमो भक्तस्तदात्मा न प्रणीयश्च ॥ ७८ ॥

Colophon. इति श्रीमद्गोपालाश्रमरूपनन्दीश्वराचार्य्योपदिष्टाद्वैतब्रह्मविद्यापद्धतौ षष्ठोऽध्यायः, समाप्तोऽयं ग्रन्थः ।

विषयः । अत्र शिवस्यैव परमतत्त्वरूपताकथनं । शैवीविद्यानिरूपणं, शिव एवोपास्य इति कथनञ्च ।

---

## No 1762. ज्योतिःशास्त्रसमुच्चयः ।

Substance, country-made paper, 12¼ × 5½ inches Folia, 126 Lines, 10 on a page Extent, 2,814 s'lokas. Character, Nágara Date, ? Place of deposit, Calcutta, Government of India Appearance, old. Prose and verse Incorrect.

*Jyotih-s'ástra-samuchchaya* A compilation on civil astronomy and astrology. By Nanda Pandita. The author was a great Smṛiti scholar, and compiled several works on the subject. The work under notice is one of several treatises bearing the generic name of *Samuchchaya*, and is designed to afford full information on the selection of proper days for the performance of civil rites.

Beginning. ॐ श्रीमान् सहस्रकिरणः श्रियमातनोतु युष्मभ्यमभ्यधिकमानतिमात्रलभ्यः ।
मुक्तिं मुमुक्षुरधिगच्छति य प्रसाद्य भक्त्या विभूतिमतुलामपि भुक्तिकामः ॥
ॐ अथ ज्योतिःशास्त्रसमुच्चय तत्र प्रथमं प्रभवादिवर्षविचारः ।

End श्रीनारायणपादपङ्कजनतिप्राप्तप्रबोधोदयो
वेदानङ्गयुतान् सभारतखिलान् साहित्यकाव्यान्वितान् ।
मीमांसेश्वरसाङ्ख्यबौधमखिलं चार्व्वाकजैनाभिध
यन्यं यो व्यष्णोत् स पण्डितकवि श्रीदेवशर्म्मोऽभवत् ॥
तस्य श्रीशिनिकृष्णभक्तिनिरतो नन्दाभिधोऽभूत् सुतो
विन्दा देवपदारविन्दशरणा यस्य प्रसिद्धा प्रद्ध ।
सोऽयं नातिलघुं न विस्तुततरं ज्योतिर्विदां सेवको
ज्योतिःशास्त्रसमुच्चय व्यरचयद्विद्योघसम्प्रार्थितं ॥
विलसदभयदमिव सिचराजीवनेत्रं भवजलधिवहित्रं दानवानामसित्रं ।
विषधररिपुपत्रं देवकीगौरिपुत्र गहनतरचरित्र नौमि मायाविचित्रं ॥

Colophon. इति श्रीपण्डितनन्दविरचितो ज्योतिःशास्त्रसमुच्चय समाप्तः ।

विषय । अथ प्रथमं प्रभवादिषष्टिसंवत्सरविचारः । ततः अयनविचारः । अधिमास-
विचारः । तिथिविचारः । वारविचारः । नक्षत्रविचारः । उपयोगविचारः ।
विष्कुम्भादियोगविचारः । करणविचारः । भद्राविचारः । चन्द्रविचारः ।
करणप्रस्तारः । ताराविचारः । ताराप्रस्तारः । मुहूर्त्तविचारः । लग्नविचारः ।
गोचरविचारः । राजाभिषेकविचारः । वस्त्रादिपरिधानविचारः । व्रतारम्भः ।
विद्यारम्भः । धनुर्विद्यारम्भः । नृत्यगीतप्रारम्भः । अनध्यायः । होमादि-
नक्षत्राणि । वेतालादिसाधन । अभिचारकृत्य । धर्म्मारम्भ । सेवानक्षत्राणि ।
सभारम्भः । क्षौरविचारः । चूड़ाकर्म्म । अन्नप्राशनं । कर्णवेधनं । पुंसवन ।
नामकरण । सूर्य्येन्दुदर्शननिष्क्रमाणि । अग्न्याधान । श्रावणीविचारः । जला-
रम्भनक्षत्राणि । वृक्षरोपणं । गजकार्य्यनक्षत्राणि । गोनक्षत्राणि । क्रयविक्र-
यादिनक्षत्राणि । अग्निनक्षत्राणि । हलनक्षत्राणि । पञ्चकविचारः । सर्प-
दंशनक्षत्राणि । रोगनिवृत्तिलक्षणानि । रोगमुक्तस्नाननक्षत्राणि । यात्राविधानं ।
दिक्साधनं । उपनयनं । विवाहनिर्णयः । द्विरागमनं । वास्तुविचारः । गृह-
प्रवेशादिविधि । देवादिप्रतिष्ठा । सङ्क्रान्तिनिर्णयः । सूत्रविचारः । मूलाश्लेष-
गण्डान्तशान्ति । गण्डान्तविचारः । ज्येष्ठाजातनिर्णयः । ज्येष्ठाविचारः । अग-
स्त्योदयविचारः । संवत्सरपुरुषलक्षणं । सद्यजातकाध्याय । सद्योवर्षणाध्यायः ।
रविवर्षफलं । चन्द्रवर्षफल । भौमवर्षफलं । बुधवर्षफल । जीववर्षफल ।
शुक्रवर्षफलं । शनिवर्षफलं । मासफल । ग्रहणविचार । केतुलक्षणं । पिटक-
विचारः । अङ्गस्फुरणविचारः । शनिचक्रं । प्रकीर्णकं । रोहिणीयोगः । पल्ली-
विचारः । पल्लीसरटशान्तिविधानं । संवत्सरमाहात्म्य । स्वप्नदर्शनफलं ।
अशुभदर्शनप्रतीकार ॥

---

## No. 1763. मानसोल्लासः, मानसोल्लासवृत्तान्ताख्यटीकासहितः ।

*Substance*, country-made paper, *15 × 6 inches*. *Folia*, *41* *Lines*, *14* on a page. Extent, 2,700 s'lokas Character, Nagara. Date, ? Place of deposit, Calcutta, Government of India Appearance, old. Prose and verse. Correct

*Mánasollása* and *Mánasollása-vrittánta*. The first is a metrical commentary on a poem of ten stanzas by S'aṅkara Áchárya, in praise of *Dakshinámúrti, a form of Durgá; the second is a prose gloss*

on the commentary The first is by Vis'res'rara *alias* Vis'varúpa Achárya, a pupil of Sankara Achárya, the second is by Ráma Tirtha, a hermit of his school

Beginning (टी॰)। श्रीदक्षिणामवटद्रुमतटे योगासनस्थं प्रभुं
प्रत्यक्तत्त्वबुभुत्सु प्रतिदिशं प्रोद्वीक्ष्यमाणाननं ।
मुद्रां तर्कमयीं दधानममलं कर्पूरगौरं शिवं
ध्यायन् कलये स्फुरत्कनकनिभं श्रीदक्षिणामूर्त्तिकं ॥ १ ॥
नत्वाथ शङ्कराचार्यमुख्यान् सर्वान् गरीयसः ।
मानसोल्लासवृत्तान्तं वर्णयामि यथामति ॥ २ ॥
इह हि भाष्यकारः श्रीमच्छङ्कराचार्यनामा मन्दमतीनप्यजिज्ञासूननुग्रहीतुं दक्षिणामूर्त्तिस्तवव्याजेन समस्तवेदान्तार्थरहस्यमाविश्चकार, इममेव ग्रन्थं तच्छिष्येण विश्वरूपाचार्येण सुरेश्वरापरनाम्ना तत्पदप्रबन्धार्थतत्त्वं तात्पर्यतो मानसोल्लासनाम्ना वार्त्तिकात्मना प्रबन्धेनाविष्कृतमिमं ग्रन्थं यथाशक्ति विवृणोमि । तत्र शिष्याचारसंरक्षणाय कृतं मङ्गलाचरणं द्योतयन्नयमाद्य श्लोकः मङ्गलमिति ।१।

(मू॰)। मङ्गलं दिशतु मे विनायको मङ्गलं दिशतु मे सरस्वती ।
मङ्गलं दिशतु मे महेश्वरो मङ्गलं दिशतु मे महेश्वरी ॥ १ ॥
आत्मलाभात् परो लाभो नास्तीति मुनयो विदुः ।
तल्लाभार्थं कविः स्तौति स्वात्मानं परमेश्वरं ॥ २ ॥
स्वेच्छया सृष्टमाविश्य विश्वं यो मनसि स्थितः ।
स्तोत्रेण स्तूयते तेन स एव परमेश्वरः ॥ ३ ॥
अस्ति प्रकाशत इति व्यवहारः प्रवर्त्तते ।
सत्तास्तित्वं प्रकाशित्वं कस्मिन्नर्थे व्यवस्थितं ॥ ४ ॥
किमन्येषु तेषु भावेषु किंवा सर्वात्मनीश्वरे ।
ईश्वरत्वस्य जीवत्वं सर्वात्मत्वस्य कीदृशं ॥ ५ ॥
जानीयात्तत् कथं जीवः किं तज्ज्ञानस्य साधनं ।
ज्ञानात्तस्य फलं किं स्यादेकत्वस्य कथं भवेत् ॥ ६ ॥
सर्वज्ञः सर्वकर्त्ता च कथं जीवो भविष्यति ।
शिष्यं प्रतीत्थं पृच्छन्तं वक्तुं प्रारभते गुरुः ॥ ७ ॥
विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ।

## No. 1883. अधिकरणकौमुदी ।

Substance, country-made paper, 15 × 4 inches Folia, 52. Lines, 7 on a page. Extent, 1,562 s'lokas Character, Maithili. Date, ? Place of deposit, Magrani, Post, Madhubaní, Darbhañga, Pandit Chhoti Jhá Appearance, new. Prose. Correct

*Adhikarana-kaumudi.* A dissertation on the philosophy of sacrifices. By Devanátha Thakkura, pupil of Soma Bhatta.

Beginning. पुराणमजरं देवं कामदं कामरूपिणं।
अनिदानं निदानन्तं योगिनं भोगिनं नुमः ॥
आस्ते देव स्मरपरवश श्रीरतावद्यन्त्य
प्रौढोत्तुङ्गस्तनभरनमत्कामिनीकामकेलि ।
अस्माकं वापरवशमना किं जगन्नाथ तावद्-
भावी भावद्वरणकमले तावके मामकीनं ॥
धर्म्मांगाद्येऽधिकरणे विचारैरुपकारकः ।
विदुषा देवनाथेन निर्व्वन्धेन निबध्यते ॥
परिसंख्यानियमयोस्तथा विध्यनुवादयोः ।
भेदकं कथ्यते सम्यक् पर्य्युदासनिषेधयोः ॥ इत्यादि।

End. रत्नाकरे कल्पतरौ श्रीदेवधरनाथयोः ।
वाचस्पतौ निरूढं यत सद्भावश्चि गुरुक्रमात् ॥
सोमभट्टोपदिष्टेन पथा स्फुरतो मम ।
मीमांसाविषयारण्ये प्रसरतु भारती ॥

Colophon. इति महामहोपाध्यायश्रीदेवनाथठक्कुरनिर्म्मिता अधिकरणकौमुदी समाप्ता।

विषय । अधिकरणस्वरूपविवेचनं । आत्मास्यन्तेन्यायपक्षकालवणा स्थान-प्रतिषेध-विनिरसनाविरुद्ध-उत्सर्ग-पौर्णमासी-कन्दनादीनां प्रत्यक्षलक्षणनिरूपणं। सर्व्व-प्रशंसा। धर्म्मलक्षणनिरूपणादिकं। वेदलक्षणादिनिरूपणं। आचारादीनां-लक्षणं। विधिस्वरूपविवेचनं। एवं परिसंख्यानियमानुवादानां स्वरूपादिचि-न्तनं। अर्थवादस्वरूपचिन्तनं। पर्य्युदासनिषेधनिरूपणं। प्रमाणनयोः स्वरू-पादिकथनं। आदित्यस्थलयोः लक्षणादिकीर्त्तनं। पूर्त्तिमन्त्रादिनिरूपणं। वर्णाश्रमलक्षणनिरूपणञ्च। विकल्पादिसरूपकथनं। इत्यादिवचनेऽर्थविषयाय निरूपणादिकं। धात्वर्थादिनिरूपणं। परिच्छेदविशेषस्वरूपादिविवेचनं। सत्रा-धिकरणं। समताधिकरणं। अर्थवादविधिपदे वैदिकादिनिरूपणं। पाशावि-

करण। सर्व्वशक्त्यधिकरण। कपालाधिकरण। गवामयने गोदाधिकरण। निषादस्थपतौ बीजविवेचन। स्वविसभयत्वाधिकरण। विश्वजिन्न्यायनिरूपण। अर्थवादाद्विधिकल्पनाधिकरणं। तदायन्तापकर्षन्यायकथनं। सर्व्वंगणप्रत्ययाधिकरण। प्रायणीयोदयनीयाधिकरण। श्रुतिप्रत्ययौ विरोधे श्रुतेर्गरीयस्त्वाधिकरण। रात्रिसत्राधिकरण। कपिञ्जलाधिकरण। सूक्तवाकादिवद्वाक्यभेदाधिकरण। आरम्भसिद्धान्ताधिकरण। पदावनीयाधिकरण। खलेवालीयूपाधिकरणं। आर्थक्रमेण शब्दक्रमबाधाधिकरण। आवणीन्याय। पदपाठन्यायविवेचनं। सामान्यविशेषन्याय। आश्रयिन्याय। शब्दधिकरणं। प्रतिनिधधिकरण। अभ्युदितेष्ट्यधिकरण। क्रमणाधिकरणं। दवताधिकरण। सामान्यविधिकल्पनाधिकरण। सत्राधिकरण। अधिकारबलाबलाधिकरण। प्रयोगप्रथक्त्वन्याय। गौणमुख्याधिकरण। गुणलोपे मुख्यलोपाधिकरण। आग्निमरुताधिकरण। स्वाराज्येष्ट्याधिकरण। तत्राधिकरण। अधिकरणादीनां प्रत्येक स्वरूपकथनपूर्व्वकमुदाहरणप्रदर्शनञ्च।

---

No 1884 पातञ्जलसूत्रभाष्य।

Substance, country-made paper, 11 × 5 inches Folia 41 Lines 10 on a page Extent 1 211 s'lokas Character, Nagara. Date Sr 1852 Place of deposit Magrani, Post Madhubani Darbhánga, Pandit Chhoti Jhá Appearance, fresh Prose Correct

*Patañjala-sutra bháshya* A commentary on Patañjala's aphorisms of the Yoga system By Bhavadeva Misra, Mahámahopádhyáya, son of Krishnadeva Misra The work is very scarce, but not much quoted.

Beginning पतञ्जलि नमस्कृत्य योगिनान्याश योगिन।
मयदेवम ततूवव्याख्यानं क्रियत स्फुटा।
महर्षे कुर्व्वेव क्रियाबधानाय प्रतिजानीते अथेति।

End. इदमनिमषभावं पूर्व्वभाष्यात् प्रसूतं
दिशि दिशि यन्नु दीपदीपनवाकमीति।
सुमतिनिति सुधीभिर्दशसौरप्रसादाद्
भवतु च भवभीतिध्वान्तादि विवेका॥
महानके पद्मपनभाग्निम् विश वपुर्विबरता मतीत्य।
निरीय भाषादिष्वम प्रवीर्दे स्मर्यैत्य भाष्यमिदं अथापि॥

Colophon इति मैथिलसन्मिश्रश्रीकृष्णदेवतनयमहामहोपाध्यायसन्मिश्रश्रीभवदेवकृतपातञ्जलसूत्रभाष्ये कैवल्यनिरूपणे चतुर्थचरणव्याख्या सम्पूर्णा। शुभमस्तु। सवत् १७५२।

विषय। योगसूत्रस्य व्याख्यान।

---

## No 1885 सिद्धान्ततत्त्वविवेकः।

Substance, country-made paper, 16 × 4 inches Folia, 172 Lines, 9 on a page Extent, 5,776 slokas Character, Nagara Date, ? Place of deposit, Calcutta, Government of India A second copy at Magrani Post Madhubani, Darbhanga, Pandit Chhoti Jha Appearance, old Prose Correct

*Siddhanta tattva viveka* A disquisition on the eternity of matter. By Gokulanatha Mahamahopadhyaya

Beginning प्रबलपवनवेगघट्टितोऽपि स्खलति नयन्नजगद्यदुविपत्भारः।
लघुगुरुतुलनातुलाप्रकाण्डदृढिमगुणः स भवद्गुणत्रयस्य॥
हिरण्यगर्भन्य गुरु शरीर- संख्यालयं पुरुषं पुराणं।
अणोरणीयान् महतो महीयान् पश्यत्यचक्षुः स श्रुतोत्यकर्णः॥
सकलाङ्कुरकारिबीजानुगतं तदकारित्वाहतं कुर्वद्रूपत्वं नाम सामान्यं न कस्यचि
समुचितं गौरवात्। इत्यादि।

End अनन्यसूचिता मार्गास्तर्काणामुपदर्शिताः।
अनेन सह देवेश दूरे तत्त्वविनिर्णयः।

Colophon इति महामहोपाध्यायगोकुलनाथविरचितः सिद्धान्ततत्त्वविवेको नाम न्यायनिबन्धविशेषः समाप्तः।

विषय। सामान्यादिनिरूपणप्रसङ्गेन लाघवगौरवस्वरूपविवेचनं। दिक्कालयोः स्वरूपविवेचनं। अत्र दिक्कालौ नश्वरादतिरिक्तावित्ति तथा ज्ञानकारणभावस्य ईश्वरस्यैव सर्वसमवायित्वमिति सिद्धान्तनिगमनखण्डनं। द्रव्यपदार्थविवेचनं। द्रव्यसाक्षात्कारप्रकारकथनप्रसङ्गेन इन्द्रियादिलक्षणविवेचनं। अन्तरिन्द्रियसाधनं। प्रत्यक्षप्रमितिस्वरूपविवेचनं। परिमाणनिरूपणं। प्रत्यक्षद्रव्यसाधनं। द्रुतेव मूर्त्तं सदेव भूतत्वमिति भट्टाचार्यमतखण्डनं। द्रव्यस्य गुणसमवायीकुर्वतो मतखण्डनं। परत्वापरत्वस्वरूपविवेचनं। विशेषपदार्थविवेचनं। नीलादीनां सर्वेषां गुणानां कथंचिद्यावद्व्यक्तिनिरूपणं द्रव्यमात्रे कारणकथनं।

धात्वर्थविवेचन। शाब्दबोधप्रक्रियाविवेचन। संस्कारानुभवादिस्वरूपविवेचन। अभावप्रत्यक्षतामनङ्गीकुर्वतां मतखण्डन। कारणतास्वरूपनिरूपण। यागादिध्वंसेनैव स्वर्गादिकमुपपादयतां धर्माधर्मभावद्वेषिणां मतखण्डन। संशयकारणकथनमुखेन चित्सुखादिमतखण्डन। अनुगतलक्षणव्यवहारकारणनिरूपण सत्तासामान्यादिलक्षणविवेचन। संख्या खलु शक्तिप्रभृतीनां पदार्थान्तरत्ववादखण्डन।

---

## No 1886 . कृत्यमहार्णव.।

Substance country made paper, 12 × 4 inches Foli, 122 Lines, 7 on a page Extent, 3 811 slokas Character, Maithili Date, . ? Place of deposit Magrani, Post Madhubani, Darbhanga, Pandit Chhoti Jha Appearance, old Prose and verse Correct

*Kritya maharnava* A philosophical disquisition on sacrificial rites By Vachaspati Misra,—compiled under the patronage of Maharaja Harinarayana, of Tirhut

Beginning आभीरदारकमुदञ्चितकिङ्किणीकमाताम्रपाणिचरणं पुरुष पुराण।
मञ्जीरमञ्जुमरणाधरमम्बुजाक्षमद्वैतचिन्मयमनादिमनन्तमीडे॥
आसीन्मैथिलमेदिनीशासनस्य प्रत्यर्थिसीमन्तिनी-
निश्वासाञ्चितभुजप्रतापतपनश्रीभग्नसप्तार्णवः।
राजन्यौघिकुमुद्वतीपरिमलप्रागल्भविभूषणश्चो
राजा श्रोत्रियवंशभूषणमणि श्रीमान भवेश कृती॥
अस्यान्ववायममलं विमलीकरिष्यन् कीर्त्या दिशो दश सुगन्धयलीकरिष्यन्।
भूपालमौलिमणिसंहतिदन्तुरीकरिष्यन् आविर्बभूव तनयो हरसिंहदेव॥
तस्मादुद्भवदवनिभूषणमणि मर्यादकन्यामणि।
भट्टसकोभरणि प्रतापतपनप्रारम्भसंहारणि॥
प्रत्यर्थिक्षितिपान्धकारतरणि श्रीदर्पनारायणो।
राजासीदवनीविभूषणमणिर्भूपालचूडामणि॥
आसन्दयन द्विजकुलं विधकुलमुत्सीमयन्नरिकुलं।
तस्मादजनि कृती श्रीहरिनारायणो नृपतिः॥

— — — — —

श्रीवाचस्पतिमिश्र श्रीनारायणानां प्रसादसादाश्च।

श्रीमानय नरेन्द्र श्रीकृत्यमहार्णव तनुते॥ इत्यादि।

End मिथिलाधिपतिविधात श्रीहरिनारायणस्य कीर्त्तिरया।
यावद्रविकरस्तु भुवने यावद्विष्णुविरोचनो गगने॥

Colophon इति सप्रक्रियमहाराजाधिराजश्रीहरिनारायणनिदेशान्महामहोपाध्यायमिश्र श्रीवाचस्पतिविरचित कृत्यमहार्णव समाप्तिमगात।

विषय। धर्मस्वरूपविवेचन। धर्मशास्त्रनिरूपण। सामान्यत परिभाषाकथनं। मलमासादिस्वरूपकीर्त्तन। वैशाखकृत्यनिरूपण। तत्र विशेषेण श्रक्षयतृतीयाकृत्यकथनं। ज्यैष्ठकृत्य। श्राषाढकृत्यनिरूपण। चातुर्म्मास्यव्रतक्रमनिरूपण। श्रावणकृत्यनिरूपण। तत्र विशेषेण श्रमृतकृत्यनिरूपण। भाद्रकृत्यनिरूपण। तत्र कृष्णपक्षे पुष्पनक्षत्रे कन्यागतानामुत्सर्गाख्यकर्म्मविधानकीर्त्तन। महालक्ष्मीव्रतनिरूपण। श्राश्विनकृत्यनिरूपण। हस्तादित्ये खञ्जनदर्शनविधिकथनं। देवीपक्षकृत्यनिरूपण। पूर्णिमाकृत्यनिरूपण। कार्त्तिककृत्य। मार्गशीर्षकृत्यनिरूपण। पौषकृत्यनिरूपण। माघकृत्यनिरूपण। फाल्गुणकृत्यं। विशेषण शिवरात्रिविधानकीर्त्तन। चैत्रकृत्य। तत्र मदनद्वादश्यादिविधान। भोजनचतुर्द्दशीविधि। सामान्यत वारकृत्यनिरूपण। विजयादियोगकृत्यनिरूपण। गणेशव्रतविधान। श्रविघ्नव्रतनिरूपण। देवीव्रतानि। सौरव्रतानि। सामान्यव्रतानि। शिवव्रतानि। विष्णुव्रतानि। काम्यैकादशीव्रतानि। द्वादशीव्रतानि। तत्र कूर्म्मद्वादशीव्रत। वराहद्वादशीव्रत। वामनद्वादशीव्रत। परशुरामद्वादशीव्रत। राघवद्वादशीव्रत। बुद्धद्वादशीव्रत। कल्किद्वादशीव्रत। पद्मनाभद्वादशीव्रत। धरणीव्रत। जन्मदिनकृत्य। षष्ठीपूजाविधान। सर्व्वगन्धगणकथन। सर्व्वरत्नगणकथन। सर्व्वधातुगणकथन। सर्व्वौषधिगणकथन। श्रष्टादशधान्यकथन। कार्त्तिक दीपदानविधिकथन। तिथिद्वैधव्यवस्थाकथन। संक्रान्तिनिर्णय। पक्षादिनिरूपणञ्च।

---

## No 1687. न्यायरत्नमाला।

Substance country made paper 12 × 3½ inches Folia 95 Lines 7 on a page Extent, 1,985 s'lokas Character, Nagara Date ? Place of deposit Ujana, Post Madhubani Darbhanga Pandit Yogadatta Jha Appearance, fresh. Prose and verse Incorrect

*Nyayaratna mala.* A metrical epitome of the Mimansá doctrine inculcated in the *Tantra vartika* alias *Nyayaratna* of Bhatta Kumarila

Svámi By Párthasárathí Mis'ra A corrupt codex of this work has been noticed under No 1557 (IV, p 134). The description there given is incorrect Hall's 'Contributions,' pp 170-172

Beginning आनन्दमयत ज्ञानमज साक्षिणमीश्वर ।
प्रणम्य सर्व्वसमर्थञ्च सम्द इव हरि विभ ॥
मीमासार्णवसम्भूतै कुमारस्वामिनाहृतै ।
न्यायरत्नैरिय माला सम्पन्यामि मनारमा ॥
तत्र स्वाध्यायविध्यर्थ प्रथम तावदुच्यते ।
आचार्य्यदृष्टिमाश्रित्य प्रतिपक्षनिराकृत ॥
तत्र तावदिम कश्चित पूर्व्वपक्ष प्रचक्षते ।
आचार्य्यक नयागार्थै स्वाध्यायस्ततप्रयुक्तित ॥
अथनावगतत्वेन तद्धि युक्त प्रयोजन ।
तत्र वाक्यार्थविज्ञान तद्धि पश्चात प्रतीयते ॥
तस्य विवक्षितार्थत्वाद्द्रस्यार्थविचारण ।
न कथञ्चन शास्त्र मीमासार्थमनर्थक ॥
आचार्य्यकरणकविधिप्रयुक्तस्य हि स्वाध्यायाध्ययनस्य प्रयोजनापेक्षाया पुरुषा-
न्तरगामित्वन इत्यादि ।

End तस्मात् सिद्ध काम्यनित्ययोर्विशेष इति ।
पार्थसारथिना सम्यग विभये नित्यकाम्ययो ।
आचार्य्यमतमाश्रित्य न्यायलश प्रदर्शित ॥

Colophon इति पार्थसारथिमिश्रविरचिताया न्यायरत्नमालाया नित्यकाम्यादिविवेक ।

विषय । प्रथमत स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिचर्चा । मीमासाशास्त्रारम्भस्य प्रयोजनादिनिरूपण । अध्ययनविधौ फलाश्रुतत्वेन विश्वजिन्न्यायेन न स्वर्गार्थतेति-निर्णय । तत्र अर्थज्ञानार्थत्वादध्ययनस्य तस्य च विचारमन्तरेणासम्भवात् तदनन्तर धर्म्मजिज्ञासा कर्त्तव्येतिनिरूपणञ्च । विज्ञानस्य स्वत प्रामाण्य न तु परत इति निरूपण । तत्र प्रामाण्यादिलक्षणविमर्शन । धर्मस्य उभयवादिसिद्धप्रामाण्याभावेन विचाराविषयत्वात्स्य स्वत प्रामाण्य सिद्धमिति केषाञ्चिन्मतकथन । वेदप्रामाण्यनिरूपण । परत एव यथार्थत्वरूप प्रामाण्य निर्णीयते इति परमतखण्डनञ्च । विधिस्वरूपविवेचन तत्र प्रवर्त्तकज्ञानादिनिरूपण । भावनादिस्वरूपकथन । अन्यान्यमतखण्डनपुर सर तदिद कर्त्तव्यतारूप प्रवर्त्तनारूप, वा समीहितसाधनत्वमत्र लिङादिभिरभिधीयते इति लिङाद्यर्थनिरूपणञ्च । अ।

त्रिपादकथन। अत्र कार्य्यकारणभावाद्विनाभावनियमस्तथा स्वभावात् कार्य्यकारणभावाद्विनाभावनियम इत्यादिकाणाद-शाक्यादिसिद्धान्तदूषणपूर्व्वकं त्रा त्रिपदोपपादकथनञ्च। वाक्यार्थनिरूपण। तत्र शक्तिवादकथन। आकाङ्क्षायोग्यतादीनां स्वरूपादिनिरूपण। अन्यान्यमतखण्डनपुरःसरमभिहितान्वयवादसंस्थापन। अपि च न वाक्यं पदानि वा साक्षाद्वाक्यार्थबुद्धिजनयन्ति किन्तु पदमरूपाभिहितैः पदार्थैः वाक्यार्थः सलक्ष्यत इति मीमांसकमत वाक्यार्थो लाक्षणिक इति संस्थापनञ्च। नित्यकाम्ययोः वैषम्यं नास्तीति कपाह्विन्नतखण्डनपूर्व्वकं तथारन्योन्य वैषम्यनिरूपण।

---

## No 1888 पारिजातहरण। (नाटक)।

Substance, country made paper, 10 × 3 inches Folia, 20 Lines, 5 on a page Extent, 237 slokas Character, Maithili Date, ? Place of deposit, Dharmmapura, Post Madhubani Darbhanga, Pandit Gopala Thakura Appearance, old. Prose and verse Correct

*Páryata harana* A drama of the class called Rúpaka founded on an incident in the life of Krishna By Umapatidhara Upadhyaya The story runs that on one occasion Krishna was engaged in a picnic with his family when Narada paid him a visit, and presented him a celestial flower called *Paryata*, which he had brought from the Nandana garden of Indra. Krishna gave the flower to his chief queen Rukmini Satyabhamá, another queen, who was present at the place, took this as a slight upon her, and was offended To pacify her, Krishna sent for another flower, but Indra declined to give it Thereupon Krishna, with the aid of Arjuna, assailed Indra, overcame him in battle, and brought away a number of the rare flower from his garden The author was a poet of high rank in the court of Lakshmana Sena of Bengal, and Jayadeva, in his Gitagovinda, eulogizes him highly An inscription composed by the author is still extant

Beginning चोणी यस्य रहे स्तणाब्धकस्तूलार्णव पयस्सर्पाङ्ग वसन विभाति गगन कस्तूरिका लेपन।
चन्द्रश्चस्तराट्चन्दनमुडश्रेणी गता मान्यता
तन श्रीहरकोप्रवेग हरिता द्विन्द्रपति पात्वतां॥

अपि च।

यस्यास्य पूर्णचन्द्रद्युतिवचनमगमत् दिग्जयश्रीश्च लक्ष्मी-
र्दोर्लक्ष्म पारिजातो भ्रुकुटिकुटिलिका सङ्गर कालकूट ॥
तीव्र तेजोऽग्निरौर्व्वं पदभजनपरा राजराज्यश्रीरटिन्य ।
पारावारो गुणानामयमतुलतरं पातु हिन्दूपतिर्वः ॥

नान्द्यन्ते सूत्रधारः।

अलमतिविस्तरेण। आर्य्ये इतस्तावत्। प्रविश्य नटी। आज्ञापयतु आर्य्यपुत्त्रः। सूत्र।
आदिष्टोऽस्मि यवनवनच्छेदनकरालकरवालेन विच्छेदगतचतुर्व्वेदपथप्रकाशक
प्रतापेन भगवत श्रीविष्णोर्दशमावतारेण हिन्दूपतिहरिहरदेवेन। यथा उमा-
पत्युपाध्यायविरचित नवपारिजातमङ्गलमभिनीय वीररसावेशं शमयन्तु भगवन्तो
भूपालमण्डलस्य। इत्यादि।

End उर्व्वीं शस्येन गुर्व्वीं विलसतु सुखिनः सन्तु सर्व्वे च लोकाः।
क्षोणीपाल समन्तात प्रवितरतु गुणं भावयित्वा वसूनि ॥
साधूनां सन्निधाने सहपिशुनजनेरे + + केऽपि सा भू
दाश्चन्द्रार्कं कवीनां स्फुरति भगवती भारती भद्रिभद्रे ॥

Colophon इति महामहोपाध्यायकविपण्डितमुख्यश्रीमदुमापत्युपाध्यायविरचित पारिजात-
हरणाख्यनाटकं समाप्तं।

विषय। एकदा मधुमासे रुक्मिण्या सह वसन्तोत्सवमाधुर्य्यमनुभवन् श्रीकृष्णः प्रमदोद्याने
समुपस्थित आसीत्। अथ तत्र सुमुखीसहाया सत्यभामापि समुपस्थाय तम् सर्व्वं
भवर्द्धयामास। अत्रान्तरे पारिजातमञ्जरीसनाथकरेण नारदेन भगवन्तमभ्युपत्य
सङ्गीतालापेन भगवतः प्रीतिं जनयता पारिजातमञ्जरीयं रुक्मिण्याः करे सम
र्पिता। अथ सत्यभामा तद्दर्शनेन नितरां सन्तापमापन्नापि, सुमुख्याभिरस्का-
रेण सन्धुक्षिताभिमानानला अलङ्करणादिकं विहाय रोषागारं प्रविवेश। अथ
विदितवृत्तान्तो भगवानपि चरणसंवाहनादिना तस्याः प्रीतिं सञ्जनयन्नेव पारि-
जातमञ्जरीलाभार्थं नारदमेव पुरन्दरपार्श्वं प्रेरयामास। अथ नारदमुखात् अस
न्देशदुश्चेष्टितमाकर्ण्य अर्ज्जुनसहायेन उपेन्द्रेण इन्द्रं पराभूय पारिजातमञ्जरी
समानिन्ये। एतान्नमिममवलम्ब्य विरचितमिदं रूपकं।

## No 1889 न्यायनिबन्धप्रकाशः । ( चतुर्थाध्यायः ) ।

Substance, palm leaf, 12 × 1⅓ inches Folia, 71 Lines, 5 on a page. Extent, 1,312 s'lokas Character, Maithili Date, L Sen's, E 355 Place of deposit, Ujana, Post Madhubaní, Darbhangá, Pandit Yogadatta Jhá Appearance, old Prose Correct

*Nyáya nibandha prakás'a* A commentary on the *Nyayanibandha*, alias *Nyáyavártika-tatparya*, of Uddyotakara By Vardhamána Upadhyaya, son of Ganges'vara Upádhyaya. The work is exceedingly rare, and of high repute. The codex contains only the fourth chapter.

Beginning अनादिभवसम्भूततापत्रयविनाशकृत ।
तत्त्वज्ञानिर्मदीया न कार्य्यमेव शिव नुम ॥
नमस्कारस्तुतरपि मङ्गलान्मोचहेतुतत्त्वज्ञानविषयमीश्वर स्तौति ।
यानाप्तनेति । यथा पतिमीश्वरमथ राजान नुम स्तुम, ईश्वरपक्षे यान गमनं चेष्टा । इत्यादि ।

End न तु स एवैतदाकार इत्यत आह इत्येवमिति ।
यमर्कतन्त्रमतपयमदृढरश्मिर्गङ्गेश्वरः सुकविकैरव + + + + ॥
+ + + + पितुरधीत्य निबन्धमित्य प्राकाशयत् क्षितिसुदे वृधवर्द्धमान ।

Colophon इति महामहोपाध्यायश्रीगङ्गेश्वरात्मजमहोपाध्यायश्रीवर्द्धमानविरचिते न्यायनिबन्धप्रकाशे चतुर्थोऽध्याय समाप्त । शुभमस्तु । लम्स । ३५५ । आश्विन शुदि ।

विषय । न्यायनिबन्धस्य व्याख्यान ।

---

## No 1890 गृह्यपद्धतिः ।

Substance, country made paper, 10 × 5 inches Folia, 60 Lines, 8 on a page Extent, 1,534 s'lokas Character, Nagara Date, ? Place of deposit, Ujana, Post Madhubani, Darbhanga, Pandit Gosaiñ Jha Appearance, new Prose Correct

*Grihya paddhati* Detailed descriptions of the domestic rites enjoined in the Grihya Sútra of Paraskara. By Vasudeva Dikshita

Beginning अथातो गृह्यसूत्रविहितानामाधानादिसर्व्वकर्म्मणा माधारणे विधिरुच्यते ।
तत्रावसथ्याधानादिषु सप्तमाधेषु सर्व्वकर्म्मसु यजमानस्यैव कर्तृत्वं । इत्यादि ।

End अथ चोर्जं यशो वल। यन्मे नुममधीतं यन्मे सनपि तिष्ठतु तिष्ठतिति॥

Colophon इति श्रीदीक्षितवासुदेवविरचितायां गृह्यपद्धतौ तृतीयं काण्डं समाप्तं।

विषय। अथ पारस्करगृह्यव्याख्यानां तत्र्षेदां कर्मणां पद्धतिकथन। तत्र पञ्चमहायज्ञादिविधिकथनं। आवसथ्याधानविधिकथन। मधुपर्कविधिकथन। विवाहविधान। रात्रौ रथाद्यभेदकर्मविधिकथनं। चतुर्थीकर्मकथन। ऋतुकालाभिगमनविधिकथन। पुंसवनविधिकथनं। सीमन्तोन्नयनविधिकथन। जातकर्मविधि। निष्क्रमणविधि। अन्नप्राशनविधि। चूडाकरणविधि। व्रतबन्धविधि। मेदाग्रणविधि। व्रतविसर्गविधि। स्नातकस्य यमनियमादिविधि। पञ्चमहायज्ञविधि। उपाकर्मविधि। उत्सर्गविधि। लाङ्गलयोजनविधि। श्रवणाकर्मविधि। इन्द्रयज्ञविधि। इषातकाकर्मविधि। सीतायज्ञविधि आग्रयणीकर्मविधि। प्रत्यवरोहणविधि। चतुर्थीधाष्टकाविधि। श्राद्धकर्मविधि। मणिकाधानविधि। शीर्षरोगभैषज्यविधि। शूलगवविधि। गोयज्ञविधि। वृषोत्सर्गविधि। उदककर्मविधि। अर्घपात्रविधि। सभाप्रवेशनविधि। रथारोहणविधि। हस्त्यारोहणविधिकथनञ्च।

---

## No 1891 गृह्यसूत्रविवरणं।

Substance, country made paper, 10 × 4 inches Folia, 64 Lines 8 on a page Extent, 1,270 s'lokas Character, Nagara Date, ? Place of deposit Ujana, Post Madhubani Darbhanga, Pandit Gosain Jha Appearance new Prose Generally correct

*Gṛhya-sūtra vivaraṇa* A commentary on Paraskara's aphorisms on domestic rites By Karka Upadhyaya

Beginning पारस्करकृतसार्थसूत्रव्याख्या गुरूक्तित।
कर्कोपाध्यायकेनेय तमो नत्वा जगद्गुरुं॥
श्रौताधानादीनि कर्माणि उक्तानि।
तदनन्तरं स्मार्तानि अनुविधीयन्ते॥
तत्रैतदादिम सूत्र।
अथातो गृह्यस्थालीपाकानां कर्म। व्याख्यास्यते—इति सूत्रमेव। इत्यादि।

End अथातः सभाप्रवेशनमित्यादि यत तत्सर्वं निगदव्याख्यातमेव।

Colophon इति कर्कोपाध्यायकृतं गृह्यसूत्रविवरणं समाप्तं।

विषयः। शुक्लयजुर्वेदीयपारस्करगृह्यसूत्रस्य व्याख्यानं।

---

## No. 1892. नान्दीमुखनिरूपणं ।

Substance, country made paper, 10 × 2 inches. Folia, 15 Lines, 5 on a page. Extent, 148 s'lokas. Character, Maithili. Date, ? Place of deposit, Ujána, Post Madhubaní, Darbhángá, Pandit, Bholi Jhá. Appearance, new. Prose and verse Generally correct.

*Nándímukha-nirúpaṇa.* On the propriety of performing a S'ráddha on joyous occasions, such as marriages, initiations &c., to invoke the blessings of the manes, and the details thereof. By Hridayanátha S'armá, of Mithilá.

Beginning. गिरिजाङ्घ्रिरजोलेशपूता सुरतरङ्गिणी ।
तनोतु मे सदा नीरकपर्दे तापहारिणी ॥
अथाभ्युदयिकश्राद्धं निर्णीयते ।
न इष्टापूजाद्र्ध्वं कर्माभ्युदयिक सर्वत्र ।
कर्मादिषु च सर्वेषु मातरः सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥
अभीष्टसम्पादनेन अनुगृह्णन्ति—इत्यर्थः ॥
अत्र पूजयन्तीति फलश्रवणात् प्रधानमेव मातृपूजनमिति । इत्यादि ।

End. अत एव दयाशीला जनाः सर्वोपकारकाः ।
इत्येव हृदय नूनमवलम्बनमस्ति मे ॥

Colophon. इति श्रोत्रियकुलकुमुदचन्द्रश्रीमद्धृदयनाथशर्म्मकृतनान्दीमुखनिरूपणं समाप्तं ।

विषयः । आभ्युदयिकश्राद्धस्य मङ्गलार्थेतिकर्त्तव्यतानिरूपणं ।

---

gifts S'raddha before marriage Weights Lunar months Intercallary months Rites during such months Mourning Rites on the day after mourning Persons entitled to perform S'raddhas. Rules regarding S'raddhas Adoption The rite of Vrishotsarga Bathing and offering of water to the manes Use of Darbha grass Time meet for S'raddha S'raddhas during the wane S'raddhas on the day of Navanna Do during eclipses The fast of Janmashtami The fast of Ekadas'i Purifications Rules regarding Sapindas Inheritance

Beginning आनादावाचारे बहुतरविचारोज्ज्वलतरे।
परेषां केषाञ्चित् प्रसरति हथा दूषणगणः ॥
मुहुर्येत्वा तत्त्वावगतिशरणं तातचरणं।
हरेर्भक्त्या युक्त्या परिहरति न श्रीनरहरिः ॥
तत्रादौ नामनिर्णयः। शुभङ्करत्यादेव शर्मादिविनिर्युक्तं नाम ब्राह्मण क्षत्रिय
घरमित्यादि स्मृतिदर्शनात्।

End सा चावश्य निरस्यैव इति प्रकाशयाम्येव श्रेयसीति रत्नाकरः। पत्नीपुत्रद्वारापि
मात्समंकान्त सौदायिकतया याकादवातीन्याद्दायमिदं आगतं ॥

Colophon इति महामहोपाध्यायश्रीनरहरिकृतो द्वैतनिर्णयः समाप्तिमगात्।

विषय। ब्राह्मणादीनां नामनिरूपणं। कर्म्मविशेषे नाम्नि प्रथमाषष्ठ्यादिविभक्तिप्रयोग
नियमनं। दक्षिणादिस्वरूपादिविवेचनं। दानादिलक्षणनिरूपणं। आभ्युद-
यिकनिर्णयः। व्यवहारोपयोगिमानिरूपणं। चान्द्रादिमासनिरूपणं। मलिम्लुचे
शुक्लादिमासरीत्यैव व्यवस्थाकथनं। अधिमासादिनिरूपणं। तत्र कृत्यनिरूपणं।
आशौचनिरूपणं। आशौचान्तदिने मृतादिना दूषिते श्राद्धे कर्त्तव्योऽपि नेत्यर्थ
ज्ञापि कार्य्यामीतिव्यवस्थाकथनं। श्राद्धाधिकारिपरम्पराकथनं। श्राद्धविधिकथनं।
दत्तकपुत्रग्रहणविधिकथनं। वृषोत्सर्गविधिकथनं। स्नानविधानकथनं। स्नान
तर्पणादिविधिकथनं। दर्भनिरूपणं। श्राद्धपूजाविधिकथनं। श्राद्धकालनिरूपणं।
अपरपक्षश्राद्धादिविधानकथनं। नवान्नश्राद्धविधिकथनं। ग्रहणनि-
मित्तश्राद्धनिरूपणं। जन्माष्टमीव्रतविधानादिकथनं। एकादशीव्रतविधानादि-
कथनं। शुद्धिनिरूपणं। तत्र सापिण्ड्यादिविवेचनं। दायविभागकथनं। तदन्त-
र्गतम् अर्थेन द्वैतविषयं एव सर्वोऽस्मदत्तमहुदाहरणेन भृशं।

---

## No 1894 कृष्णार्चनचन्द्रिका ।

Substance, country made paper, 12 × 3 inches Folia 48 Lines, 5 on a page Extent 646 slokas Character, Maithili Date, ? Place of deposit, Ujana, Post Magarani Darbhanga, Pandit Bholi Jha Appearance, Fresh Prose and verse Incorrect

*Krishnárchana chandrika* Directions for the worship of Krishna By Ratnapani Compiled by order of a king of Mithila

Beginning विष्णारण्यद्व नवं युगयुगे भक्तानुकम्पाकर ।
अन्यादिविनतुच्च तारकमनु ध्यालाग्रये भक्तित ॥
श्रीकृष्णार्चनचन्द्रिका वि कलये श्रीमैाथलेगाज्ञया ।
प्रोद्यतपण्डितमण्डलीषु विनत श्रीरत्नपाणि सुधी ॥
अथ प्रासादाये मनोरथ चतुर्द्वार षोडशहस्त मण्डप । इत्यादि ।

End अप्रधानप्रतिमाया सद्यस्थान प्राणप्रतिष्ठाञ्च कृत्वा पूजन कुर्य्यादिति वाध्य ॥

Colophon इति कृष्णार्चनचन्द्रिका समाप्ता ।

विषय । विष्णुप्रासादविग्रहादप्रतिष्ठाविधानकथन । नव ग्रयागकथनञ्च ।

---

## No. 1895 तिथिनिर्णय ।

Substance country made paper 12 × 4 inches Folia 20 Lines 7 on a page Extent, 515 slokas Character Maithili Date ? Place of deposit Dharmmapura Post Madhubani Darbhanga Pandit Gopala Ṭhakura Appearance, old Prose and verse Correct

*Tithi nirnaya* A dissertation on the lunar days and the religious duties appertaining thereto By Sulpankara This is different from the work described under No 1837 p 119

Beginning यद्वैताद्वाधमम्राय निर्गुणस्थितिरव्यय ।
अमलामादिमूलाय नमस परमात्मन ॥
विभोवय कुनिवाक्यानि शम्द + + नुमारत ।
तिथिद्वैधविधौ यत्नात क्रियत तिथिनिर्णय ॥
विप्रतिपन्नानां परस्परविरोधपरिहारा निर्णय । इत्यादि ।

End एतदेव सुजनस्य लक्षणं दूषणेऽपि गुणमेव पश्यति ।
एतदेव पिशुनस्य लक्षणं दूषणं किल गुणेऽपि पश्यति ॥

Colophon इति श्रीशुभङ्करकृततिथिनिर्णयः समाप्तः शुभमस्तु ।

विषय । निर्णयलक्षणं । तिथिद्वैधे व्यवस्थाकथनं । तत्र पञ्चदशतिथिषु पक्षादिभेदेन युग्माद्यादरादिविशेषनिरूपणं । क्षयावृत्तितिथिव्यवस्था । नक्षत्रतिथिव्यवस्था । उपवासे नियमादिकथनं । अनध्यायतिथ्यादिलक्षणकीर्त्तनञ्च ।

---

## No 1896 जातकतिलकं ।

Substance, country made paper, 9 × 4 inches Folia 124 Lines 10 on a page Extent 3 078 slokas Character, Nagara Date, ? Place of deposit Ujana, Post Madhubani Darbhanga, Pandit, Yogadatta Jhá Appearance, old Verse Correct

*Jataka tilaka* A comprehensive treatise on the casting of horoscopes By Kamalakra Acharyá

Beginning महादेवहृषीकेशलोकेशाखण्डलादयः ।
स्मरन्ति यं विजयते स देवो वारणाननः ॥
प्रवाहशक्तिमयनैर्यदधीनमिदं जगत् ।
स एक एव विश्वात्मा विभाति रविरीश्वरः ॥
वराहमिहिराचार्य्यः श्रीमानार्य्यभटः कृती ।
ब्रह्मगुप्तोऽतिमतिमान् जयन्ति गणकेश्वराः ॥
विद्येश्वरं गुरुं वन्दे सन्देहतमसां ततिं ।
गम्भीरगणनाम्भोधिमुद्रिन्श्चयमन्दराचलं ॥
प्रणम्य यत्पदाम्भोजं विट्ठलं कुलदैवतं ।
शास्त्राशास्त्रमतिः स्पष्टं कुरुते कमलाकरः ॥
पुराणमतशास्त्राणां रहस्यं यदनाकुलं ।
भूयोऽनुभवसम्पन्नं तत्सूर्यमिह कथ्यते ॥
वृषभो मिथुनः कर्कः सिंहः कन्या तुलाधरः । इत्यादि ।

End मेषान्त्य कपिल सूरयन्न उपतटपदेश ।
लग्नग्रहकमाभिस्र क्रियार्थी सोरिताशक ॥

Colophon इति कमलाकराचार्य्यविरचितं जातकतिलके द्वादशाध्यायः । श्रीरस्तु शुभं भवतु ॥

## No 1897 केशवपद्धत्युदाहरण ।

Substance, country made paper, 11 × 4 inche Folia, 44 Lines 9 on a page Extent 1 790 slokas Character Maithili Date, ? Place of deposit Ujana Post Madhubani Darbhánga Pandit Yogadatta Jhá Appearance old Prose Correct

*Kes'avapaddhatyudaharana* Exercises for the illustration of the rules laid down in Kes ava's treatise on the casting of horoscopes By Vis vanatha Daivajna, son of Divakara Daivajna

Beginning श्रीगणेशं नमस्कृत्य केशवीनामपद्धते ।
गणितं विश्वनाथेन क्रियते बालवृद्धये ॥
मत्वा विघ्नति । अथ केशव जातकपद्धति कुर्व्वे । जातस्य जातक जातस्य बालकस्य जन्मान्तरार्जितसदसत्कर्मजनितशुभाशुभफलनिरूपकं शास्त्रं जातक मित्युच्यते ॥ इत्यादि ।

End यस्या वक्तृणा चाद्यस्य शुभं भवतु । ये सुबोधानिनिमित्ताय । इति ग्रन्थपाठकस्य फलश्रुतिद्वारा ग्रन्थप्रशंसा ।

Colophon इति श्रीदिवाकरदैवज्ञात्मजविश्वनाथदैवज्ञविरचित केशवपद्धत्युदाहरणेऽसदेशाध्याय । समाप्तोऽयं ग्रन्थ ।

विषय । केशवकृतजातकपद्धतेर्व्याख्यानं ।

---

## No 1898 शिशुबोधिनी ।

Substance country made paper 11 × 4½ inches Folia 109 Lines 12—14 on a page Extent 5 910 slokas Character Maithili Date Sa 1788 Place of deposit Ujana Post Madhubani Darbhanga Pandit Yogadatta Jha. Appearance old Prose Correct

*S'is'ubodhini* A commentary on Nilakantha's 'Tajikabhushana,'—a work on horoscopy By Madhava Jyotirvit, son of Govinda Jyotirvit Nilakantha was the son of Ananta of the Gargya clan An astrological work of this name occurs under No 120, (I, p 239) but it is totally different, and by a different author

Beginning. हेरम्ब भुवनमाद्यं नत्वा गणनाथपादयुग्मं ।
गौरीसुतमपरमासरति विघ्नहरं श्रीवासक ॥

इष्टद्वेदिक्कनाकं सुमनसा सिद्धि × + दिपद् ।
भिन्दूरारुणगण्डदुग्गमनिशं भालीषधीशं भजे ॥
— — — — — — — —।

नत्र तावत सकलमुनिश्रेष्ठमार्य्यवंशतिलको निखिलदैवज्ञमुकुटहीर धनन्न ज्योतिर्व्विन्नूज श्रीनीलकण्ठज्योतिर्व्विन्तमज्ञातकवर्षतन्त्रप्रश्नतन्त्रकपकरण-त्रयात्मकस्य जीर्णताजिकशास्त्रस्य प्रथम प्रकरण मज्ञाविवकनामक— — ताजिकप्रन्थमुपज्ञातिकया प्रतिज्ञानीते प्रणमयति ॥

End — ग्रन्थपचगग्रचौ शिवपूर्थ्या ग्रन्थपूर्त्तिमगात् । तस्मान्मद्यमिष्टफलदो गणनायक इति ।

Colophon — इति विद्दैवज्ञमुकुटभूषणगोविन्दज्योतिर्व्विन्मुतमाधवज्योतिर्व्विद्विरचिता सिद्ध-बोधिनी समाप्ता ।

विषय । — नीलकण्ठकृतताजिकाभिधानज्योतिर्ग्रन्थस्य व्याख्यान ।

---

## No 1899 हरिश्चन्द्रचरितं ।

Substance, country made paper, 11 × 3½ inches Folia, 40 Lines, 6 on a page Extent, 570 slokas Character Maithili Date, ? Place of deposit *Ujána Post Madhubani Darbhanga Pandit Yogadatta Jhá* Appearance, old Verse Correct

*Harischandra charita* An epic poem on the life of Harischandra, a pious king of remote antiquity, who was, for his virtues, translated along with all his subjects to heaven, and there recounting his munificence and liberality in a vaunting style, was hurled to mid air, where he exists with his subjects The story is given in the Vishnu Purana. The codex breaks off at the end of the 5th canto, and the author's name has not been made out

Beginning जयति जगतजयवादप्राच म दयपशाधि ।
यद्दाङ्के गिरिकन्या मनेम्मिता यस्य ननयच ॥
शारदनीरदगगधरचन्दनघनसारकाशमौक्ता ।
दिग्यात्मकमलाजहसादन्निमी म शारदा धिषणा ॥
आसीदकचविष एकमेव रत्नाकर कीर्त्तिनिशाकरस्य ।
धनन्यसाधारण राजधिकधारी हरिश्चन्द्र इति दिलीप ॥ इत्यादि ।

End इदानीमधिगतानां कार्य्यं किञ्चन दृश्यते ।
धनेन तदिदं राजन्न मया विद्यमानं ॥
तथेति नारदप्राज्ञा गिरश्छन्नमदन्निक ।
— — — — — — —।

Colophon इति हरिश्चन्द्रचरिते धीरचित्ते पञ्चम सर्गः । इत परं पतितं।

विषय । प्रथमे सर्गे हरिश्चन्द्रस्य शौर्य्यगाम्भीर्य्यादिगुणवर्णनं । तस्य रूपवर्णनं । प्रजारञ्जनवर्णनं । वैभववर्णनं । दैनिककृत्यवर्णनञ्च । द्वितीये सर्गे,—यज्ञसपरिणयस्य तस्य दूरत चराणां मल्लिकाभिधानाया राजपुत्र्या रूपवर्णनं । तया सह तस्य परिणयसम्बन्धवर्णनं । विवाहोत्सववर्णनं । पुरकामिनीनां विभ्रमवर्णनं । तृतीये सर्गे,—विलासस्थाननिर्म्माणादिवर्णनं । मल्लिकाया माधुर्य्यादिवर्णनं । केलिवनादौ विलासवर्णनं । षड्ऋतुविहारवर्णनं । जलक्रीडावर्णनञ्च ।
चतुर्थे सर्गे,—हरिश्चन्द्रसन्दर्शनाय समागतानां राजन्यानामाप्यायनादिवर्णनं । हरिश्चन्द्रस्य पुत्रजन्मोत्सववर्णनं । विश्वामित्रसमागमवर्णनञ्च ।
पञ्चम सर्गे,—हरिश्चन्द्रस्य सभाजनार्थं नारदस्यागमनवर्णनं । तयोरन्योन्य सम्भाषणादिवर्णनं । नारदोपदेशेन हरिश्चन्द्रस्य यज्ञानुष्ठानविधिवर्णनञ्च । इत परं नास्ति ।

---

## No 1900 कारकवादः ।

Substance, country made paper, 10 × 3 inches Folia, 20 Lines, 7 on a page Extent, 319 s'lokas Character, Maithili Date, ? Place of deposit, Dharmmapura, Post Madhubani, Darbhángá, Pandit Gopala Ṭhakura, a second copy at Guptipáḍá, Pandit Khudirama Nyáyabhúshana Appearance, old. Prose Correct

*Karakaváda.* A philosophical dissertation on the use of the case-affixes By Krishna Bhaṭṭa

Beginning कारुण्यवर्षजलद फलद तपसा सता ।
नीलोत्पलदलश्यामं निर्म्माय धाम कामद ॥
तर्कव्याकृतिमीमांसापरिशीलनशालिना ।
गौरिसौकृष्णभट्टेन विभक्त्यर्थो विरच्यते ॥
तत्र सुविभक्तीनामर्थो विरच्यते ।

End प्रकृतिविशत्युमदकर्म्मस्थले तु स्वायुत्पत्त्यर्थयोरविरभक्तवारणाय दर्शितदिशा बो।

Colophon इति कारकवाद समाप्त ।

विषय । कारकविभक्त्यर्थकथनं ।

## No 1901 कर्क्कानुगपदार्थदीपिका, पौर्णमासेष्टि ।

Substance country made paper 10 × 4 inches Folia 44 Line 6—7 on a page Extent 577 sloka Character Nagara Date ? Place of deposit Ujana Post Madhubani Darbhanga Pandit Yogadatta Jha Appearance fresh Prose Correct

*Karkanuga padartha dipika* A manual for the performance of Vedic rites according to the rules of Karka Upadhyaya, who explains the Sutras of Apastambha on the rituals of the Black Yajur Veda By Narayana son of Ramachandra Yajnika Pathaka, and younger brother of Gangádhara The codex is incomplete and contains only the section on the Full moon rites, Purnamaseshti

Beginning प्रणम्य विघ्नहर्तारं गुरुञ्च पितरं तथा ।
कर्कानुगपदार्थानां दीपिका तन्यते मया ॥
अत ग्रा धय उद्गयन मनमापगुरुपाक्रमै य यादक्य मैशव सूत्रकादिरदिनार्थ
प्रथमपौर्णमास्यां इत्यादि ।

End चाद्व वलीय पम्याने वा कर्त्तव्यमननैव मन्त्रेण स्वाहाकारस्तथापि ॥

Colophon इति श्रीमन्महायाज्ञिकपाठकरामचन्द्रसुतश्रीमत्सकलयज्ञगाम्बविशारदपाठक
गङ्गाधरानुजनारायणकृतौ कर्कानुगपदार्थदीपिकायां पूर्णमासेष्टि समाप्ता ।

विषय । पूर्णमासेष्टिप्रयोगकथन ।

---

रमयतु कमला-मे सद्मनि प्रीतिकान्तै-
र्हरिचरणरजोभिर्वासितं मे मनोऽस्तु ॥
— — — — — — ।
वाणीप्रसादमासाद्य शास्त्रयुक्तिं विलोक्य च ।
मासि मासि तिथेस्तत्त्वं महेशेन विविच्यते ॥
स्वान्तैः पश्यन्तु मात्सर्य्यमुत्सार्य्य विधिसम्मतं ।
स्वमाश्रवा विषीदन्तु सत्पण्डितकुतूहलैः ॥
शुद्धा विद्धा तिथिः प्रोक्ता द्विविधा धर्मशासनैः ।
संशयस्यापनोदाय विशेषोऽस्मिन् प्रदर्श्यते ॥
तत्र तिथिर्हि इत्यादि ।

End. भोक्ष्यामि नक्त भूशय्यां करिष्ये प्राणिनां दयां इति नक्तव्रतत्वात् सायाह्नव्यापिनी ग्राह्येति ।

Colophon. इति महामहोपाध्यायश्रीमहेशठक्कुरकृतौ तिथितत्त्वचिन्तामणिः समाप्तः ।

विषयः । तिथिस्वरूपकथनं । चान्द्रादिमासनिरूपणं । पक्षभेदेन तिथिव्यवस्थाकथनं । ग्राह्याग्राह्यतिथिज्ञापनविभागनिर्णयः । प्रातःसङ्गवादीनां लक्षणादिनिरूपणं । अरुणोदयकालविवेचनं । सामान्यतः कर्म्मयोग्यकालनिरूपणं । सच शुद्धावि-द्धाभेदेन द्विविधतिथिकथनं । श्रावणमासादारभ्य प्रतिपदादिषु सर्व्वासु तिथिषु विहितानां कर्म्मणां क्रमेण व्यवस्थानिरूपणं । अत्र सर्व्वत्र गौडदाक्षिणात्यमतपर्या-लोचनपूर्व्वकं व्यवस्थाकथनमिति ज्ञेयं । तत्र श्रावणे मनोरथचतुर्थी । नागपञ्चमी । हयग्रीवपूर्णिमा । संक्रान्तिव्यवस्था । भाद्रे कज्जली तृतीया । बहुला चतुर्थी । शीतलाव्रतं । जन्माष्टमी कुशोत्पाटनविधिः हरितालिकाव्रतं । रम्भाव्रतं । कलङ्कचतुर्थीव्रतं । गौरीचतुर्थीव्रतं । नष्टचन्द्रदर्शनविधिः । ऋषिपञ्चमी । सूर्य्यषष्ठी । दूर्व्वाष्टमीव्रतं । नवमीप्रसङ्गेन रामनवमीव्यवस्थानिरूपणं । तथा *दशमीप्रसङ्गेन दशहराव्यवस्थाकीर्त्तनञ्च । विस्तरेण एकादशीव्यवस्थानिरूपणं ।* नक्तव्रतव्यवस्था । एकादशीव्रताशक्तस्य कर्त्तव्यताकथनं । एकादशीव्रतविधिः । अन-न्तव्रतं । अगस्त्योदयविधिः । आश्विने अश्वयुक्शुक्लपक्षव्यवस्था । चन्द्रषष्ठी । महा-लक्ष्मीव्रतं । अष्टकाश्राद्धं । मघात्रयोदशी । पितृपक्षादिकृतानां श्राद्धविधिः । शुक्लप्रतिपदि मातामहश्राद्धकर्त्तव्यता । नवरात्रविधिः । चण्डीपाठविधिः । विज-यादशमीकृत्यं । कोजागरविधिः । प्रातःस्नानविधिः । कार्त्तिके मीनविशेषदर्शने फलविशेषकथनं । मालाधारणविधिः । द्यूतविशेषफलादिकथनं । आकाश-दीपदानं । उल्कादानविधिः । अमावास्याकृत्यं । प्रतिपदि गोक्रीडनविधिः ।

---

वसिष्ठ उवाच। साधु साधु महाभाग यन्मां त्वं परिपृच्छसि।
विस्तरेण प्रवक्ष्यामि यथाज्ञानं पितामहात्॥ इत्यादि।

End सायनं तद्वशाच्च सूर्य्यादेरयनद्वयं।
ज्ञेयं मध्यममानेन वामदेव द्विजोत्तम॥

Colophon इति श्रीब्रह्मर्षिश्रेष्ठवसिष्ठप्रणीते विश्वप्रकाशे ग्रहकक्षाध्यायस्त्रयोदशः। श्रीरस्तु।

विषय। वामदेवेन सह वसिष्ठस्य संवादे ज्योतिश्चक्रसंस्थापनकालकथनं। ग्रहाणां भ्रमणकथनं। प्राण-पल नाडीप्रभृतीनां लक्षणकथनं। चतुर्युगमानकथनं। मनुसन्धिसंनिरूपणं। अब्दमानकालनिरूपणं। एतत्तु सत्ययुगाद्य १०२९००० वर्ष मतं—इति ज्ञेयं। ग्रहाणां पातादिनिरूपणं। तथा मध्याराद्यादिनिरूपणं। राशिनिरूपणं। चान्द्रमासादिनिरूपणं। पृथिव्याः परिधिनिरूपणं। लङ्का यमकोटि सिद्धपुर-रोमकाणां सन्निवेशनिरूपणं। सूर्य्योदयकालनिरूपणं। अधिमासनिरूपणं। क्षयमासनिरूपणं। ग्रहाणां परिधिनिरूपणं। ग्रहाणां मृदुचलपातनिरूपणं। खेटनिरूपणं। तदानयनप्रक्रियाकथनञ्च। आकर्षणेन ग्रहाणां वक्रा गतिर्भवतीतिनिरूपणं। क्रान्त्यानयनप्रकारकथनं। छायाभानयनप्रकारकथनं। दिक्साधनप्रक्रियाकथनं। उदयास्तमयनिरूपणं। कालज्ञानोपायकथनं। शङ्कुच्छन्नविधिकथनं। कालज्ञानार्थं मयूर नर-वानर-कीरयन्त्रादिविधिकथनं। ग्रहणज्ञानोपायकथनं। अत्र सर्व्वत्र उपपत्तिकथनञ्च। सूर्य्यादीनां बिम्बानयनप्रकारकथनं। परिलेखनिरूपणं। मीलनोन्मीलनकथनं। ग्रासस्पर्शवर्णादिमुपात् पातकथनं। ताराग्रहाणां युद्धकथनं। तत्र धूमकेत्वादीनां लक्षणकथनञ्च। नक्षत्राणां समराशिवलयेऽस्थितिनिरूपणं। ताराग्रहाणामुदयास्तमयज्ञानकथनं। शृङ्गोन्नतिकथनं। व्यतिपातस्य उत्पत्तिः। तस्माद्धानिकथनञ्च। मानाध्यायसंज्ञा-मादिकथनं। अस्मिन् नियतायां शतशः अवस्थानादिकथनं। यमकोटि सिद्धपुरादीनां दूरत्वादिनिरूपणं। निरक्षदेशादिनिरूपणं। भूगोलविवरणं। दिनरात्रिवृद्धिह्रासादिकारणकथनं। ग्रहाणां कक्षादिनिरूपणञ्च।

---

*Soma-siddhánta.* An original treatise on astrology. Attributed to Soma, the moon. The codex is defective.

प्रथमपत्रं नास्ति ।

Beginning. — — — तं विज्ञेयं तथा युगं ।
कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया ।
चतुर्युगानां सैका स्यात् सप्ततिर्मनुसम्भवः ॥ इत्यादि ।

End. तदेव देव तद्ब्रह्म वेदचक्षुः परं शुभं ।
अध्येतव्यं सदा विप्रैर्नान्यैर्वेदबाह्यिभिः ॥

Colophon. इति श्रीसोमसिद्धान्ते चतुर्थे गोलाध्यायो दशमः । समाप्तिमगमदयं ग्रन्थः ।
संवत् १८५०—

विषयः । युगधर्मादिनिरूपणं । मन्वादिनिरूपणं । अहर्गणानयनकालकथनं । कालादिपरिभाषा । ग्रहाणां पातकथनं । चन्द्रादियन्त्रकार्यादिषु सूर्योदयकालनिरूपणं । सूर्यादीनां परिधिकथन । ग्रहभुक्तिकथनं । क्रान्त्यानयनप्रकारादिकथनं । स्पष्टानयनादिप्रकारकथनं । कालनिरूपणं । अयनादिनिरूपणं । दिक्साधनादिविधिकथनं । त्रिप्रश्नादिकथनं । ग्रहणनिरूपणं । परिलेखादिनिरूपणं । ग्रहाणामुदयास्तमयादिनिरूपणं । शृङ्गोन्नतिकथनं । व्यतिपातादिनिरूपणं । ब्रह्माण्डसंस्थानादिकथनं । आकाशे भूगोलसंस्थानादिकथनं । निरक्षदेशादिनिरूपणं । भुवनसंस्थानादिकथनं । ग्रहाणां गतिनिरूपणादिकं । ग्रहाणां भकक्षमणादिकारणकथन । दिक्साधनयन्त्रादिकथनञ्च ।

विंशद्दर्शसहस्राणि सप्तलक्षशतानच।
त्रेताभुगगते वर्षे योगसागरगामय ॥

भृगुरुवाच। युगवेदाष्टति सख्या उन्मत प्रश्नताऽपिवा। इत्यादि।

End पञ्चक्षण्णलको मापा चाटकं सप्तमापक।
षष्टछण्णलको मापा रजत दृशमापिक ॥

Colophon इति भृगुसंहिताया भृगुशुक्रसंवादे नानायोगफल सम्पूर्ण।

विषय। शुक्रेण सह भृगो' सवादेन लोकाना शुभाशुभज्ञानसाधनयोगनिरूपण। तत्तद्योगफलकथन। तत्तत्प्रतिकारकीर्तनञ्च। अथ योगा,—मनोनयाग। विभवयोग। सौम्ययोग। यातुधान्ययोग। भीमयोग। जीमूतयोग। विजययोग। आनन्दयोग। पिङ्गलयोग। विकलयोग। समयोग। महादधियोग। पिशाचयोग। दामिनीयोग। वागसवयोग। श्रीमुखयोग। क्रूरयोग। गजयोग। उद्भवयोग। अर्द्धोद्भूतयोग। निपातयोग। विलासयोग। महिषयोग। देवेन्द्रयोग। राजयोग। स्थूलयोग। भास्करयोग। चन्द्रार्कियोग। दारुणयोग। चन्द्रयोग। चतु सागरयोग। सागरयागः। धाष्टदा योग। विष्वदा योग। चवयोग। वज्रयोग। जगत्पतियोग। कलापयोग। मानसयोग। अनुभरयोग। शुक्रयाग। शुभयोग। वैनाशिकयोग। अद्भुतयाग। शून्ययोग। नन्दयोग। जीवयोग। श्रीपुष्टयोग। कार्मुकयोग। उन्नतयाग। कङ्कयोग। आक्रान्तयोग। कार्ययोग। विगतयोग। कर्बूरयोग। चन्द्रयोग। मुद्रितयोग। यवयोग। साधारणयोग। श्रीवत्सयोग। राक्षसयाग। भैरवयोग। भीषणयोग। सङ्कटयोग। केन्द्रयोग। कुलयोग। मातङ्गयोग। पूजकयोग। पावकयोग। सर्व्वयोग। धूम्रयोग। चतुरयोग। वर्द्धमानयोग। वीरयोग। प्रभायोग। वर्व्वरयोग। गोलयोग। ध्वजयाग। कुवेरयोग। केदारयोग। कारकयोग। भ्रङ्गिरीटयोग। ब्रह्मयोग। समरयोग। वज्रयोग। शत्रुयोग। लोहितयोग। अनलयोग। पाशयोग। प्रजापतियोग। विलासहानियाग। खेटाश्चयोग। मालायाग। प्रमोदयागकथनञ्च।

---

## No 1906 प्रायश्चित्तपारिजात'।

Substance, palm leaf, 12 × 1 inches Folia, 84 Lines, 6 on a page Extent, 1,680 slokas Character, Maithili Date, ? Place of deposit Dharmmapura, Post Madhubani Darbhangā, Pandit, Gopala Ṭhakkura Appearance, old. Prose and verse Correct

*Prayaśchitta párijata* A dissertation on expiations or Prayaschitta for accidental or voluntary transgressions of the rules of the Smriti By Ganesa Misra, Mahamahopadhyaya

Beginning नत्वा रामपदद्वन्द्व भवार्णवतारणं ।
प्रायश्चित्तपारिजातो गणेशेन वितन्यते ॥
नत्र हारीतः । प्रयतत्वाद्वापचितमशुभं नाशयतीति प्रायश्चित्तं । अस्यार्थ ।
इत्यादि ।

End अथ एव व्रतं मद्धोर्णोपपातकानुपातक महापातकषु व्रतम + + मत
ज्ज्वगायत्रीजप । इति सर्व्वमवदात ।

Colophon इति महामहोपाध्यायश्रीगणेशमिश्रकृत प्रायश्चित्तपारिजात समाप्त ।

विषय । प्रायश्चित्तलक्षण । उपपातकानुपातक महापातकानिरूपण । संसर्गविधिकथनं । धेनुमूल्यव्यवस्थाकथन । प्रायश्चित्तपूर्व्वाङ्गकार्यनिरूपण । व्रतनिरूपण । गोवधप्रायश्चित्तकथन । पञ्चविधवधनिरूपण । चान्द्रायणादिप्रायश्चित्तं । चान्द्रायणशिशुचान्द्रायणादिनिरूपण । प्रायश्चित्तपरीक्षणविधि । क्षत्रियादिवधप्रायश्चित्त । स्त्रीवधप्रायश्चित्त । चाण्डालादन्नभक्षणादिप्रायश्चित्त । अगम्यागमनादिप्रायश्चित्त । भार्य्या मातृसम्भाषणादिप्रायश्चित्त । गोमांसादिभक्षणप्रायश्चित्त । रेतोमूत्रादिपानप्रायश्चित्त । रजस्वलागमनप्रायश्चित्त । भार्य्यागमनप्रायश्चित्त । रजस्वलागमनप्रायश्चित्त । पितृव्यपत्न्यादिगमनप्रायश्चित्त । सुवर्णमणिमुक्तादिस्तेयप्रायश्चित्त । ब्रह्मवधप्रायश्चित्त । सुरापानप्रायश्चित्त । असत्यभाषणप्रायश्चित्तं । अपथपूर्व्वकमासद्वानादिप्रायश्चित्तकथनञ्च ।

---

## No 1907 शब्दपरिच्छेदालोक ।

Substance, palm leaf 11 × 1½ inches. Folia 151 Lines, 6 on a page Extent, 3 825 slokas. Character Maithili Date L Sen & F 435 A D 1549 Place of deposit Sarisava, Post Madhubani Darbhanga, Pandit Srinandana Thakura Appearance old decayed Prose. Correct

*Aloka* A commentary on the Chintámani of Gangesa By Jayadeva The codex contains only the chapter on Sabda. It is three hundred and thirty nine years old

Beginning न जाने श्रीजाने विचरितुमिद पद्मसदन
सम + नेवार्थानधिगमयितुं निश्चिमिरपि ।

सथापेत्तावन्त्यामपि किन्चिन्नित्यासचमित्र

— — — — — — — ॥

अथेति। इत्यायमस्त्यानन्तप्रवचनत्वेन तवचावधित्वेन उपस्थितस्य उपमान-निरूपणस्यैव इत्यादि।

End. तदेव विभाजकोपाधित्वेन उच्यतामतो न विभागव्याघात इत्यपि निरस्तं सति प्रमाणभेदे अनुगमकगवेषणादिति ॥

Colophon इति महामहोपाध्यायमन्निमधीनपद्देवकृत शब्दपरिच्छेदालोक समाप्त इति। लम ४९५। श्रावणवदि।

विषय। तत्त्वचिन्तामण्यन्तर्गतशब्दखण्डस्य व्याख्यान।

---

## No 1908 लीलावतीटीका।

Substance palm leaf, 11 × 1½ inches Folia, 190 Lines, 6 on a page Extent 5,211 s'lokas Character, Maithili Date, ? Place of deposit, Sarvvasima Post Madhubani, Darbhanga, Pandit S'rinandana Thakura Appearance, old, decayed Prose Correct

*Lilavati tika* A commentary on the Nyáya lilavati of Vallabha Acharya By Bhagiratha Misra *The codex is defective*

Beginning सदाद्दलितदैत्येन्द्रदन्तद्वयदिदृक्षया।
विस्फारित चतुर्दिक्षु नरसिंह नमाम्यहं ॥
आसविना गुणवतापि निगूढभावा
लीलावती गुणवती न मुदं तनोति।
एततत्र + + + + + गुणनमहत्या
भाव भगीरथसुधी मरलीकरोति ॥
ग्रन्थारम्भे विघ्नविघाताय कृत मङ्गल तत्र शिष्याणां शिष्टाचारविषयत्वरूपलिङ्ग-ज्ञानाय निबध्नाति—एकचेति।

End अनुव्यवसायातिरिक्तस्थले सामान्ययोग्यभिप्रायस्य संस्कारस्यैव प्रत्यासत्तिमित्यभिमान—

Colophon इत्यत खण्डितत्वात् परिसमाप्तिसूचकं वाक्यं नास्ति।

विषयः। न्यायलीलावत्या व्याख्यान।

---

## No. 1909 कण्टकोद्धारः ।

Substance, palm-leaf, 12 × 1½ inches Folia, 174 Lines, 6 on a page. Extent, 5,579 s'lokas Character, Maithilí Date, L. S 459 Place of deposit, Sarvasímá, Post Madhubaní, Darbhángá, Pandit S'rínandana Thákura Appearance, old. Prose Correct

*Kantakoddhára.* A gloss on Jayadeva's commentary on the 'Anumána-khanda' portion of the 'Tattva-chintámani' of Gañges'a By Madhusúdana Thakkura. The codex is over three hundred years old.

Beginning. मधुसूदनसद्युक्तिमुक्तारितकण्टकाः ।
स्थाले कथन्तमार्गेण सन्ति खहन्तु पण्डिताः ॥
अथ शब्दमूचनीया मङ्गलनाद्य प्रत्यक्षेति। यद्यप्युद्देशेन प्रमाणादिस्वपञ्चतस्य-
थापि यथोद्देशं जिज्ञासोचित्यात्। इत्यादि।

End. तत् स्वार्थे नुमानमल्पपरार्थे नुमाने तत्र साध्यविशेषणत्वमपि — —

Colophon. इति महामहोपाध्यायठक्कुरश्रीमधुसूदनकृता अतिरिक्तकण्टकोद्धारः सम्पूर्णः ।
लसं ४५९ चैत्रशुदि।

विषयः । तत्त्वचिन्तामण्यन्तर्गतानुमानखण्डस्य जयदेवमिश्रकृता आलोकनाम्नी या टीका
तस्या व्याख्यानम्।

---

## No 1910 दण्डविवेकः ।

Substance, Palm-leaf, 14 × 2 inches Folia, 187. Lines, 5 on a page Extent, 3,063 s'lokas Chara ter, Maithili Date, L S 533 Place of deposit, Saño, Darbhángá, Pandit Madhava Jha. Appearance, old. Prose and verse. Correct

Beginning. पाणिभ्यामुपजातवेपथुतया यत्नेन य कल्पितो-
येन स्वेदजलौघपूरिततया नापेचितोऽम्बुपद ।
सन्ध्यार्थेलमवेत्य यो मुकुलिते सव्ये करे कम्बुना
सादृश्य गतवान् स पातु शिवयो सायन्तनोऽर्थ्याञ्जलि ।
सार्द्धं राधिकया वनषु विहरन्नस्या कपोलस्थले
घर्माम्भोनिसर प्रसारितसपाकर्त्तुं करेण सान्न ।
तच प्रत्युत सात्त्विकाम्बुमिलनादौ जायमाने अथा-
दव्याद्वो विफलप्रयासविकलो गोपालरूपो हरि ॥
दण्डस्यादौ परिकरस्तत पटलस्य हेतव ।
उक्ता दण्डविवेकेऽस्मिन् परिच्छेदेषु सप्तसु ॥
तच दण्डप्रशमाया मनु । इत्यादि ।

End. न शक्यमन्योन्यविरुद्धधर्म्मिणो गणे+ पैर्म्भक्रमसमीप्रकीर्णकाः ।
उदाहृतास्तत्तदुपाधिकल्पनास्तथाप्यभीष्टार्थ+ चिन्त्यतामये ॥

Colophon इति महामहोपाध्यायधर्म्माधिकरणिकश्रीवर्द्धमानकृतौ दण्डविवेके प्रकीर्णकद-
ण्डपरिच्छेदः समाप्त ।

कथनं। कन्याहरणदण्डकथनं। विवाहयितुर्व्वोढुश्च कूटकारिणो दण्डकथनं। स्त्रिया अपि कन्यादूषणदण्डकथनं। वन्यक्याद्यभिगमनदण्डकथनं। पशुयोनिषु गमनादिदण्डकथनञ्च।

५मे परिच्छेदे,—वाक्पारुष्यदण्डकथनं। तत्र लक्षणादिविवेचनं। देशजाति-कुलाक्षेपे दण्डकथनं। ब्राह्मणादीनां परस्पराक्षेपदण्डकथनं। पारुष्यविशेषेषु दण्ड-विशेषकथनं। मिथ्याक्रोशदण्डकथनं। राजाक्रोशे दण्डकथनं। विशिष्य अनुपदि-ष्टानां वाक्पारुष्याणां दण्डनिरूपणञ्च।

६ष्ठे परिच्छेदे,—दण्डपारुष्यदण्डनिरूपणं। तत्र हस्त-लगुड-पाषाणभस्म-कर्द्दम-पांशु-शस्त्रादिभिः प्रहरणे प्रत्येकं दण्डकथनं। पुत्रादीन् पारुष्याय प्रेरयत एव पित्रादेरपराधो न त्वन्यथेतिनिरूपणं। अदण्डनिमित्तनिरूपणं। लगुडादिना बुद्धि-पूर्व्वकमारणे दण्डकथनं। मातृपितृपुत्रदासादीनां निरतिप्रहारे दण्डकथनं। द्वयोः प्रहर्त्तृत्वे दण्डकथनं। आततायिनिरूपणानन्तरं तत्र तत्र दण्डकथनं। बहूनामेकं प्रहरतां प्रत्येकं दण्डकथनं। प्रहारार्थमुद्यतस्य दण्डकथनं। भस्मादिप्रक्षेपदण्डकथनं। शस्त्रादिकरणकप्रहारदण्डनिरूपणञ्च।

७म परिच्छेदे,—प्रकीर्णकदण्डकथनं। प्रकीर्णकभेदनिरूपणं। तत्र विहिताकरण-निषिद्धाचरणदण्डकथनं। मर्य्यादाभेदनदण्डकथनं। कूटशासनप्रयोगदण्डकथनं। राजाज्ञाप्रतीघातदण्डकथनं। पुरवासिजन-प्रकृतिप्रभृतीनां भेदने दण्डकथनं। पित्रा पुत्रस्य विवादे दण्डकथनं। प्रतिग्रहविक्षेपादिदण्डकथनं। पाषण्डादिधर्म्मवि-पर्य्यये दण्डकथनं। प्रायश्चित्तव्यतिक्रमे दण्डकथनं। वर्णसङ्करदोषे दण्डकथनं। अयुक्तस्थाने तद्ग्रहणदण्डकथनं। गण्डघातनदण्डकथनं। निधिग्रहणादौ दण्ड-कथनादिकं। साहसदण्डकथनं। रथ्यादौ कण्टकादिनिक्षेपे दण्डकथनं। मार्गाद्यु-पघातदण्डकथनं। गृहकुड्यादिभेदनदण्डकथनं। पूज्यातिक्रमदण्डकथनं। अभ-क्ष्यादिना ब्राह्मणादिदूषणे दण्डकथनं। अहैतुकप्रतिपन्नत्यागदण्डकथनं। अभि-चारादिदण्डकथनं। अदुष्टदूषणदण्डकथनं। अन्यार्थं स्तैरन्येन क्रयणे दण्डकथनं। अविक्रेयविक्रये दण्डकथनं। संक्रमादिभेदने दण्डकथनं। तडागादिभेदादौ दण्ड-कथनं। विषाग्निप्रयोगशीलायाः स्त्रिया दण्डकथनं। राजकोषापहारादौ दण्डकथ-नं। अदासीदासीकरणदण्डकथनं। राजानिष्टकारणदण्डकथनं। शय्यादिसाहने दण्डकथनं। आत्मघाते सतां रक्षिभे च दण्डकथनं। पुत्रादिहीनाया धनं गृह्णत-परस्य दण्डकथनं। विशेषेण शूद्रस्य नियमातिक्रमे दण्डकथनं। अवध्यवध-वध्यमो-क्षणयोर्दण्डकथनं। वादिना प्रतिनिधिविषये व्यवहारे परार्द्धवादिनो दण्डकथनं। शूद्रस्याधर्म्मिष्ठदण्डकथनं। द्यूतस्थिदण्डकथनं। ज्ञानतः सादिनः कौटिल्या

दनिग्रहे दण्डकथन। सेव्यद्रव्यकाले दण्डकथनं। निर्णयोत्तरकाले दण्डकथन। मिथ्याभियोगादौ दण्डकथन। एतन्न्यायविषये दण्डकथन। मोत्तरपक्षविवादविषय दण्डकथनञ्च।

---

## No 1911. अधिकरणचन्द्रिका।

Substance, country-made paper, 14 × 3½ inches. Folia, 112 Lines, 6 on a page Extent, 2,164 ślokas Character, Maithili Date, ? Place of deposit, Sáño, Darbhañga, Pandit Madhava Jha Appearance, old Prose Correct.

*Adhikarana-chandriká* On syllogisms with explanations and bearings of the various illustrations usually cited by authors. By Apadera Mahámahopádhyaya.

Beginning. इन्दिराहृदयानन्द फुल्लेन्दीवरलोचनं।
मानन्द परमानन्दं वन्देऽहं नन्दनन्दनं॥
अथ अधिकरणनिरुक्तिः, यथा —
विषयो विशयश्चैव पूर्व्वपक्षस्तथोत्तरं।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतं॥
इत्युक्तमभियुक्तैः। अस्यार्थः। यस्मिन् शास्त्रे विषयादिकं विचारस्य पञ्चाङ्गमधिक्रियते तच्छास्त्रमधिकरणं स्मृतमित्यर्थः। इत्यादि।

End. प्राकृत धर्मं कश्चिदन्वयति कश्चिल्लुम्पति च। यथा इषुयागे लूयते शरमय-बर्हिर्भवतीति॥
तत्र सामान्यतः इष्टिकायश्चातिदेशप्राप्तौ शरस्य विकृत एव उपदेशः। यदा मन्त्रेऽधिकारिविषये अतिदेशवशादेव इष्टिकर्माङ्गभावादेः धर्म्मस्य प्राप्तौ विशेषोपदेश इति विवेचनीयं।

Colophon. इति महामहोपाध्यायश्रीमन्मिश्रश्रीआपदेवकृता अधिकरणचन्द्रिका सम्पूर्णा।

विषयाः। अधिकरणनिरुक्तिः। मन्त्रप्रकरणाधिनिरूपणं। एककालाधिकरणं। निषादस्थपत्यधिकरणं। एकैकस्याधिकरणं। हविष्मदन्ताधिकरणं। धर्म्माश्रयाधिकरणं। अनारभ्याधिकरणं। चोदनाधिकरणं। पूर्व्वपक्षविप्रतिषेधाधिकरणं। वाजिनाधिकरणं। परिवृत्त्यधिकरणं। ग्रहसमाधिकरणं। प्रतिनिध्यधिकरणं। विरोधाधिकरणं। कर्त्तव्याधिकरणं। अवान्तराधिकरणं। अनन्तरवचनाधिकरणं। स्नाय्यधिकरणं। पत्न्यादिनाधिकरणं। एकादशकोपन्यासनिकरणं। देवताधिकरणं।

शूद्रस्पर्शनप्रायश्चित्त । अगम्यागमनप्रायश्चित्त । निन्दितविवाहप्रायश्चित्त । संसर्ग-प्रायश्चित्त । ब्रह्मकूर्चव्रतनिरूपण । वृषोत्सर्गविधिनिरूपण । तत्र वृषोत्सर्गप्रयोग कीर्त्तनञ्च ।

---

## No 1913 स्मृतिसारसमुच्चय, विवादप्रकरण ।

Substance Palm leaf 13 × 2 inches Folia 171 Lines, 5 on a page Extent, 2918 slokas Character, Maithili Date L S 363 Place of deposit, Darbhanga Babu Gunes vara Simha Appearance, very old Prose and verse Correct

*Smritisara samuchchaya* Part second of the work noticed under the last preceding No It treats of Judicature

Beginning प्रथमतस्तीर्णा पत्राणि न सन्ति ।

— — — सर्व्वत्र युक्तियुक्तस्य प्रमाणात् ।

न हि कश्चिद्दर्पविप्लवादेव कुर्व्वन्ति । इत्यादि ।

End अपि द्रव्यविभागो भवत्येव न स्वेच्छया पारतन्त्र्यात् । मनुः ।

यदि कुर्य्यात् समान् सा पत्नीः कार्य्याः समांशिकाः । इति ।

Colophon इति महामहोपाध्यायश्रीहरिनाथोपाध्यायविरचिते स्मृतिसारे विवादप्रकरणं परिपूर्णं । लसं ३ ३ फाल्गुन शुदि ।

विषयः । विवादपदनिरूपण । ऋणदानविधि । आधिविधि । ऋणादानाधिकारिण । निक्षेपविधिः । अस्वामिविक्रयविधि । सम्भूयसमुत्थानविधि । दत्ताप्रदानिक-विधि । दत्तविधि । अदत्तविधि । क्रीतकविधि । वेतनस्यानपाकर्मकथनं । पण्यस्त्रीविधि । स्वामिपालविवादकथन । संविद्व्यतिक्रमविधि । विक्रीयासम्प्र-दानविधि । सीमाविवादकथन । विक्रयानुशयविधिः । [illegible] । वाक्-पारुष्यविधि । दण्डपारुष्यविधि । स्तेयविधि । साहसविधि । दायभागनिरू-पण । भागानर्हकथनं । [illegible]विधिः । अविभाज्यनिरूपण । स्त्रीधनवि-भागकथनं । वर्णक्रमविभागकथनं । विभक्तजविभागविधि । पुत्रान्तरविधि । औरसक्षेत्रजादिपुत्राणांविभागकथनं अपुत्रधनविभागकथनं । संसृष्टधनविभा-गकथन । विभागसन्देहनिरूपणं । द्यूतसमाह्वयविधिः । विभागनिषेध । [illegible] [illegible]कथन । [illegible]निरूपण । [illegible]कथनं । [illegible] । [illegible]-[illegible]निरूपणं । [illegible]विधिः । [illegible] । [illegible]विधि । [illegible]विधिः [illegible]विधि । [illegible] । [illegible] । [illegible]

थनं । तत्पवादकथनं । युक्तिनिरूपणं । शपथविधिः । द्रव्यसंख्यातो दिव्यविशेषविधिः । वर्णादितो दिव्यविशेषकथनं । जयपराजयावधारणविधिः । शपथेऽक्षयमद्रप्रकारकथनं । साक्षियावकविधिः । हीनसाक्षिनिर्णयः । धनादिविधिकथनं । हतनिवृत्तिविधिः । स्वतन्त्रास्वतन्त्रलक्षणनिर्णयः । उदकपरीक्षाविधिः । प्रच्छन्नधनविभागे विशेषकथनञ्च ।

---

## No. 1914. आचारदीपिका ।

Substance, country-made paper, 15 × 5 inches Folia, 52 Lines, 10 on a page Extent, 1,593 s'lokas Character, Nagara Date, ? Place of deposit, Darbhángá, Babu Gunes'vara Siñha. Appearance, new. Prose. Incorrect

*A'chára-dípiká* A commentary on the A'chárádarsa of S'rídatta. By Harilála.

Beginning. शब्दाम्भोधिमगाधमाशु सततं संविश्य कुर्वन्ति ये
सम्यक् सद्मतत्स्फुटं धिषणया धर्मार्थिनो वी + साः ।
धन्या एव तत प्रपञ्चकलैरेव मन्ये + +
देवा देवनमस्कृता + मुदिता यास्यन्ति मोक्ष परं ।
— — — — — — — —॥
नमस्कृत्य महेशान श्रीगुरुं अद्भुतापदं ।
हरिलाल सुबोधाय करोत्याचारदीपिकां ॥
प्रारिप्सितप्रतिबन्धकीभूतोपशमाय चार्गीर्वादायकमङ्गलमादौ शिष्यशिक्षार्थे निबध्नाति—दीपितेरुणयशे । इत्यादि ।

End. यथा मद्गुरु मन्वादिवचनाथित मुशमालिन्यं ।
यथा हि यथा चर्म्मसम्पृक्तं गङ्गादिनीर्थस्य मलिन — — — तीर्थस्य-
शिलाकर्मत + चारमित्यर्थः । — — — ।

Colophon. इति हरिलालकृता आचारदीपिका समाप्ता ।

विषय । आचारादर्शस्य व्याख्यानं ।

---

